# जैनकथाद्वाविंशतिः

सोलापुरस्थेनफडकुले इत्युपा-
ह्वयेन पासू गोपाळशर्मणा

मुंबय्यां

" निर्णयसागर " मुद्रालये प्रकाशिता.

संवत् १९६३.

# उपोद्घातः ॥

श्रीमत्स्वामिसमंतभद्रविरचितो रत्नकरंडनामोपासकाध्ययनग्रंथो वर्तते सः प्रभाचंद्राचार्यैः प्रणीतया टीकयालंकृतस्तस्यां टीकायामेताः कथा उदाहृता दृश्यंते मूलग्रंथेऽपि एता नामनिर्दिष्टा आचार्यैस्तु विस्तरतो वर्णिताः ।

संस्कृतपाठशालायां आंग्लपाठशालायां वा गीर्वाणभाषाजिज्ञासूनां छात्राणां संस्कृतभाषाज्ञानधर्मबोधयोर्युगपल्लाभार्थं संपादकेनैता मुद्रयित्वा प्रसिद्धिं नीताः । अस्मिन् ग्रंथे अशुद्धदोषो यत्नेन वर्जितस्तथापि ये केचन प्रमादावशिष्टाः स्युस्ते सुज्ञैर्ज्ञापयितव्याः येनांतरस्मिन् प्रकाशनकाले तान् परिहर्तुं यतिष्यामहे । बहुषु जैनकाव्यप्रबंधेषु यद्यप्येता पद्यविरचितास्तथापि नवीनछात्राणां सुलभबोधार्थमस्माभिर्गद्यात्मिकैव प्रकाशिताः ।

**सोलापूर जैनपाठशालाध्यापकाः**

## कथा १.

### निःशंकितत्वेंगेऽजनचोरदृष्टांतस्तस्य कथा।

यथा धन्वंतरिविविशालोमौ स्वकृतकर्मवशादमितप्रभवि-द्युत्प्रभदेवौ संजातौ चान्योन्यस्य धर्मपरीक्षणार्थमत्रायातौ। ततो जमदग्निस्ताभ्यां तपसश्चालितः। अंगदेशे राजगृहनगरे जिनदत्तश्रेष्ठी कृष्णचतुर्दश्यां रात्रौ स्मशाने कायोत्सर्गे-स्थितो दृष्टः। ततोऽमितप्रभदेवेनोक्तं। दूरे तिष्ठंतु मदीया मुनयोऽमुं गृहस्थं ध्यानाच्चालयेति ततो विद्युत्प्रभदेवेनानेन यथा कृतोपसर्गोपि न चलितो ध्यानात्। ततः प्रभाते मा-यामुपसंहृत्य प्रशस्य चाकाशगामिनी विद्या दत्ता। तस्मै कथितं च तवेयं सिद्धाऽन्यस्य च पंचनमस्कारार्चनाराधन-विधिना सेत्स्यतीति। सोमदत्तपुष्पबटुकेन चैकदा जिनदत्त-श्रेष्ठी पृष्टः क्व भवान् प्रातरेवोत्थाय व्रजतीति। तेनोक्त-मकृत्रिमचैत्यालयवंदनभक्तिं कर्तुं व्रजामि। ममेत्थं विद्या-लाभः संजात इति कथिते तेनोक्तं। मम विद्यां देहि येन त्वया सह पुष्पादिकं गृहीत्वा वंदनाभक्तिं करोमीति। ततः श्रेष्ठिना तस्योपदेशो दत्तः। तेन च कृष्णचतुर्दश्यां स्मशाने वटवृक्षपूर्वशाखायामष्टोत्तरपादं दर्भशिक्यं बंधयित्वा तस्य तले तीक्ष्णशस्त्राण्यूर्ध्वमुखानि स्थापयित्वा। गंधपुष्पादिकं दत्त्वा शिक्यमध्ये प्रविश्य षष्ठोपवासे पंचनमस्कारमुच्चार्य

छुरिकयैकैकं पादं छिंदताऽधो जाज्वल्यमानप्रहरणसमूह-मालोक्य भीतेन तेन संचिंतितं । यदि श्रेष्ठिनो वचनमसत्यं भवति । तदा मरणं भवतीति । शंकितमना वारंवारं चटनोत्तरणं करोति । एतस्मिन् प्रस्तावे प्रजापालराज्ञः कनका राज्ञी हारं दृष्ट्वांजनसुंदर्या विलासिन्या रात्रावागतोंजनचोरो भणितः । यदि मे कनकहारं ददासि तदा भर्त्ता त्वं । नान्यथेति । ततो गत्वा रात्रौ हारं चोरयित्वांऽजनचोर आगच्छत् । हारोद्योतेन ज्ञातोंगरक्षैः कोट्टपालैश्च ग्रहीष्यमाणः हारं त्यक्त्वा प्रणश्य गतो वटतले वटुकं दृष्ट्वा तस्मान्मंत्रं गृहीत्वा निःशंकितेन तेन विधिनैकवारेण सर्वेशिक्यं छिन्नं शस्त्रोपरि पतितः सिद्धया विद्यया भणितमादेशं देहीति । तेनोक्तं । जिनदत्तश्रेष्ठिपार्श्वे मां नयेति । ततः सुदर्शनमेरुचैत्यालये जिनदत्तस्याग्रे नीत्वा धृतः । पूर्ववृत्तांतं कथयित्वा तेन भणितं । यथेयं सिद्धा विद्या भवदुपदेशेन तथा परलोकसिद्धावप्युपदेशमादेहीति । ततश्चारणमुनिसन्निधौ तपो गृहीत्वा कैलासे केवलमुत्पाद्य मोक्षं गतः ।

---

## कथा २.

### निःकांक्षितत्वेऽनंतमतिदृष्टांतस्तत्कथा ।

अंगदेशे चंपानगर्यां राजा वसुवर्धनो राज्ञी लक्ष्मीमती श्रेष्ठी प्रियदत्तस्तद्भार्या अंगवती । पुत्र्यनंतमती नंदीश्वराष्टम्यां श्रेष्ठिना धर्मकीर्त्याचार्यपदमूलेऽष्टदिनानि ब्रह्मचर्यं गृहीतं ।

क्रीडयाऽनंतमती तद्व्रतं च ग्राहिता । अन्यदा संप्रदानकालेऽनं-
तमत्योक्तं । तात मम त्वया ब्रह्मचर्यं दापितमतः किं विवाहेन ।
श्रेष्ठिनोक्तं क्रीडया मया ते ब्रह्मचर्यं दापितं । ननु तात,
धर्मे व्रते का क्रीडा । ननु पुत्रि नंदीश्वराष्टदिनान्येव व्रतं
तदा ते दत्तं । सोवाच न तथा भट्टारकैरविवक्षितत्वात् इति ।
इह जन्मनि परिणयने मम निवृत्तिरस्तीत्युक्त्वा सकलकला-
विज्ञानाशामकुर्वंती स्थिता यौवनभरे चैत्रे निजोद्याने
आंदोलयंती । दक्षिणश्रेणिकिन्नरपुरविद्याधरराजेन कुंडलमंडि-
तनाम्ना सुकेश्या निजभार्यया सह गगनतले गच्छता दृष्ट्वा
किमऽनया विना जीवितेनेति संचित्य भार्यां गृहे स्थापयित्वा
शीघ्रमागत्य विलपंती तेन सा नीता । आकाशे गच्छता
भार्यां दृष्ट्वा भीतेन पर्णलघुविद्यायाः समर्प्य महाटव्यां मुक्ता ।
तत्र च तां रुदंतीमालोक्य भीमनाम्ना भिल्लराजेन निजपल्लि-
कायां नीत्वा प्रधानराज्ञीपदं ददामीमामिति भणित्वा
रात्रावनिच्छंतीं भोक्तुमारब्धः व्रतमाहात्म्येन वनदेवतया
तस्य ताडनाद्युपसर्गः कृतः । देवता काचिदियमिति भीतेना-
वासितसार्थपुष्पकनाम्नः सार्थवाहस्य समर्पिता । सार्थवाहो
लोभं दर्शयित्वा परिणेतुकामो न तया वांछितः । तेन
चानीयायोध्यायां कामसेनकुट्टिन्याः समर्पिता । कथमपि
वेश्या न जाता । ततस्तया सिंहराजस्य दर्शिता । तेन रात्रौ
हठात् सेवितुमारब्धा । नगरदेवतया तद्व्रतमाहात्म्येन
तस्योपसर्गः कृतः । तेन च भीतेन गृहान्निःसारिता रुदंती

सखेदं कमलश्रीकंतिकया श्राविकेति मत्वाऽतिगौरवेणादृता। अथानंतमतिशोकविस्मरणार्थं प्रियदत्तश्रेष्ठी बहुसहायो वंदनाभक्तिं कुर्वन्नयोध्यायां गतो निजशालकजिनदत्तश्रेष्ठिनो गृहे संध्यासमये प्रविश्य रात्रौ पुत्रीहरणवार्तां कथितवान्। प्रभाते तस्मिन् वंदनाभक्तिं कृतवति सति गौरविकप्राघूर्ण्यैकनिमित्तं रसवतीं कर्तुं चतुष्कं दातुं कुशला कमलश्रीकंतिका श्राविकाजिनदत्तभार्यया आकारिता। सा च सर्वं कृत्वावसतिकां गता। वंदनाभक्तिं कृत्वा आगतेन प्रियदत्तश्रेष्ठिना चतुष्कमालोक्यानंतमतिं स्मृत्वा गद्गदितहृदयेन गद्गदितवचनेनाश्रुपातं कुर्वता भणितं। यया गृहमंडनं कृतं तां मे दर्शयेति। ततः सा आनीता तयोश्च मेलापको जातो जिनदत्तश्रेष्ठिना च महोत्सवः कृतः। अनंतमत्या चोक्तं तात इदानीं मे तपो दापय। दृष्टमेकस्मिन्नेव भवे संसारवैचित्र्यमिति। ततः सकलश्रीकंतिकापार्श्वे तपो गृहीत्वा बहुना कालेन विधिना मृत्वा तदात्मा सहस्रारदेवो जातः ॥२॥

## कथा ३.

## निर्विचिकित्सितत्व उद्दायनो दृष्टांतोऽस्य कथा।

सौधर्मेंद्रेण निजसभायां सम्यक्त्वगुणं व्यावर्णयता भरते कच्छदेशे रोरकपुरे उद्दायनमहाराजस्य निर्विचिकित्सिता गुणाः प्रशस्तास्तं परीक्षितुं वासवदेव उदुंबरकुष्टकुथितं मुनिरूपं विकृत्य तस्यैव हस्तेन विधिना स्थित्वा सर्वमाहारजलं

च मायया भक्षयित्वातिदुर्गंधं बहुवमनं कृतवान् । दुर्गंधभयान्नष्टे परिजने प्रतिष्ठनो राज्ञस्तद्देव्याश्च प्रभावत्या उपरि छर्दितं हाहा विरुद्ध आहारो दत्तो मयेत्यात्मानं निंदयतस्तं च क्षालयतः मायां परिहृत्य प्रकटीभूय पूर्ववृत्तांतं कथयित्वा प्रशस्य च स्वर्गं गतः प्रभावती तपसा ब्रह्मस्वर्गे देवो बभूव ॥ ३ ॥

---

## कथा ४.

### अमूढदृष्टित्वे रेवतीदृष्टांतोऽस्याः कथा ।

विजयार्धदक्षिणश्रेण्यां मेघकूटनगरे राजा चंद्रप्रभश्चंद्रशेखराय राज्यं दत्वा परोपकारार्थं वंदनाभक्त्यर्थं कियतीं विद्यां दधानो दक्षिणमथुरायां गत्वा गुप्ताचार्यसमीपे क्षुल्लको जातः तेनैकदा वंदनाभक्त्यर्थमुत्तरमथुरायां चलितेन गुप्ताचार्यः पृष्टः किं कस्य कथ्यते । भगवतोक्तं सुव्रतमुनेर्वंदना वरुणराजमहाराज्ञ्या रेवत्या आशीर्वादश्च कथनीयः त्रिःपृष्टेनाप्येतदेवोक्तं । ततः क्षुल्लकेनोक्तं । भव्यसेनाचार्यस्यैकादशांगं धारिणोऽन्येषां च नामापि भगवान्न गृह्णाति । तत्र किंचित्कारणं भविष्यतीति । संप्रधार्य तत्र गत्वा सुव्रतमुनेर्भट्टारकीयां वंदनां कथयित्वा तदीयं विशिष्टं वात्सल्यं दृष्ट्वा भव्यसेनवसतिकां गतस्तत्र गतस्य भव्यसेनेन संभाषणमपि न कृतं । कुंडिकां गृहीत्वा भव्यसेनेन सह बहिर्भूमिं गत्वा विकुर्वणया हरितकोमलतृणांकुरच्छन्नो मार्गो दर्शितः । तं दृष्ट्वा

आगमे किल ते जीवाः कथ्यंते । इति भणित्वा तत्रारुचिं कृत्वा तृणोपरिगतः शौचसमये कुंडिकाजलं शोषयित्वा क्षुल्लकेनोक्तं भगवन् कुंडिकायां जलं नास्ति तथा विकृतिश्च कापि न दृश्यते । अतोऽत्र स्वच्छसरोवरे प्रशस्तमृत्तिकया शौचं कुरु ततोत्रापि तथा भणित्वा शौचं कृतवान् ततस्तं मिथ्यादृष्टिं ज्ञात्वा भव्यसेनस्याभव्यसेन इति नाम कृतं । ततोऽन्यस्मिन् दिने पूर्वस्यां दिशि पद्मासनस्थं चतुर्मुखं यज्ञोपवीताद्युपेतं देवासुरवंद्यमानं ब्रह्मरूपं दर्शितं । तत्र राजादयो भव्यसेनादयश्च गताः । रेवतीकोयं ब्रह्मनामदेव इति भणित्वा लोकैः प्रेर्यमाणापि न गता एवं दक्षिणस्यां दिशि गरुडारूढचतुर्भुजं चक्रगदाशंखादिधारकं वासुदेव-रूपं दर्शितं । पश्चिमायां दिशि वृषभारूढं सार्धचंद्रं जटा-जूटगौरीगणोपेतं शंकररूपं । उत्तरस्यां दिशि समवसरण-मध्ये प्रातिहार्याष्टकोपेतं सुरनरविद्याधरमुनिवृंदवंद्यमानपर्य-कस्थं तीर्थंकररूपं दर्शितं । तत्र च सर्वे लोका गताः । रेवती तु लोकैः प्रेर्यमाणापि न गता नवैव वासुदेवाः एकादशैव रुद्राः चतुर्विंशतिरेव तीर्थंकराः जिनागमे कथिताः ते चातीताः कोप्ययं मायावीत्युक्त्वा स्थिता अन्यदिने चर्या-वेलायां व्याधिक्षीणशरीरक्षुल्लकरूपेण रेवतीगृहसमीपप्रतो-लिमार्गे मायामूर्च्छया पतितः रेवत्या तमाकर्ण्य भक्त्योत्थाप्य नीत्वादरं कृत्वा पथ्यं कारयितुमारब्धः तेन सर्वमाहारं भुक्त्वा दुर्गंधवमनं कृतं तदपनीय हाविरूपकं मयापथ्यं

दत्तमिति रेवत्या वचनमाकर्ण्य तोषान्मायामुपसंहृत्य तं देवं वंदयित्वा गुरोराशीर्वादं पूर्ववृत्तांतं च कथयित्वा लोकमध्येऽमूढदृष्टित्वं तस्या उच्चैः प्रशस्य स्वस्थानं गतः वरुणराजा नयकीर्तिपुत्राय राज्यं दत्वा तपो गृहीत्वा माहेंद्रस्वर्गे देवो जातः रेवत्यपि तपः कृत्वा ब्रह्मस्वर्गे देवो बभूव ॥ ४ ॥

---

## कथा ५

## उपगूहने जिनेंद्रभक्तो दृष्टांतोऽस्य कथा ।

सौराष्ट्रदेशे पाटलिपुत्रनगरे राजा यशध्वजो राज्ञी सुसीमा पुत्रः सुवीरः सप्तव्यसनाभिभूतस्तथाभूतः शूरपुरुषसेवितः अस्ति । पूर्वदेशे गौडविषये तामलिप्तनगर्यां जिनेंद्रभक्तश्रेष्ठिनः सप्ततलप्रासादोपरि बहुरक्षयुक्तपार्श्वनाथप्रतिमा आसीच्छत्रत्रयोपरि विशिष्टतरवैडूर्यमणिं पारंपर्येणाकर्ण्य लोभात् सुवीरेण निजपुरुषाः पृष्टाः । तं मणिं कोप्यानेतुं शक्नोतीति । इंद्रमुकुटमप्यहमानयामीति गलगर्जितं कृत्वा सूर्य्यनामचोरो क्षुल्लको भूत्वातिकायक्लेशेन ग्रामनगरेषु क्षोभं कुर्वाणः क्रमेण तामलिप्तनगरीं गतः । तमाकर्ण्य आलोक्य वंदित्वा संभाष्य प्रशस्य च क्षुभितेन जिनेंद्रभक्तश्रेष्ठिना नीत्वा पार्श्वनाथं देवं दर्शयित्वा माययानिच्छन्नपि स तत्र मणिरक्षको धृतः । एकदा क्षुल्लकं पृष्ट्वा श्रेष्ठी समुद्रयात्रां चलितो नगराद्बहिर्निर्गत्य स्थितः । स चोरः क्षुल्लको गृहजनमुपकरणानयनव्यग्रं ज्ञात्वार्धरात्रौ तं मणिं गृहीत्वा चलितः । मणितेजसा

मार्गे कोट्टपालैर्दृष्टो धर्तुमारब्धः तेभ्यः पलायितुमसमर्थः श्रेष्ठिन एव शरणं प्रविष्टो मां रक्ष रक्षेति चोक्तवान् कोट्टपालानां कलकलमाकर्ण्य पर्यालोच्य तं चोरं ज्ञात्वा दर्शनापवादप्रच्छादनार्थं भणितं श्रेष्ठिना मद्वचनेन रत्नमनेनानीतमिति। विरूपकं भवद्भिः कृतं यदस्य महातपस्विनश्चोरघोषणा कृता ततस्ते तस्य प्रणामं कृत्वा गताः स च श्रेष्ठिना रात्रौ निर्घाटितः स श्रेष्ठी वैराग्यं प्राप्य दीक्षां गृहीत्वा तपस्तप्त्वा स्वर्गं गतः एवमन्येनापि सम्यग्दृष्टिना भक्तासमर्थाज्ञानपुरुषादागतदर्शनदोषस्य प्रच्छादकं कर्तव्यं ॥ ५ ॥

---

## कथा ६.

### स्थितिकरणे वारिषेणो दृष्टांतोऽस्य कथा ।

मगधदेशे राजगृहनगरे राजा श्रेणिको राज्ञी चेलिनी पुत्रो वारिषेण उत्तमश्रावकश्चतुर्दश्यां रात्रौ कृतोपवासः स्मशाने कायोत्सर्गेण स्थितः। तस्मिन्नेव दिने उद्यानिकायां गतया मगधसुंदरीविलासिन्या श्रीकीर्तिश्रेष्ठिना परिहितो दिव्यो हारो दृष्टः। ततस्तं दृष्ट्वा किमनेनालंकारेण विना जीवितेनेति संचिन्त्य शय्यायां पतित्वा सा स्थिता। रात्रौ समागतेन विद्युच्चोरेणोक्तं प्रिये किमेवं स्थितासीति। तयोक्तं श्रीकीर्त्तिश्रेष्ठिनो हारं यदि मे ददासि तदा जीवामि त्वं च मे भर्त्ता नान्यथेति। मत्वा तां समुद्दिश्यार्धरात्रौ गत्वा निजकौशल्येन तं हारं चोरयित्वा निर्गतस्तदुद्योतेन चौरो-

यमिति ज्ञात्वा गृहरक्षकैः कोट्टपालैश्च ध्रीयमाणः पलायितुमसमर्थो वारिषेणकुमारस्याग्रे तं हारं धृत्वाऽदृश्यो भूत्वा स्थितः। कोट्टपालभटैश्च तं तदालोक्य श्रेणिकाय कथितं देव वारिषेणश्चोर इति। तच्छ्रुत्वा तेनोक्तं मूर्खस्यास्य मस्तकं गृह्यतामिति। मातंगेन च योऽसिः शिरोग्रहणार्थं वाहितः। स कंठे तस्य पुष्पमाला बभूव। तमतिशयमाकर्ण्य श्रेणिकेन गत्वा वारिषेणः क्षमां कारितो लब्धाभयप्रदानेन विद्युच्चोरेण राज्ञो निजवृत्तांते कथिते वारिषेणं गृहं नेतुमारब्धम्। तेनोक्तं मया पाणिपात्रेण भोक्तव्यमिति। ततोसौ सुरदेवमुनिसमीपे पलाशकूटग्रामे चर्यायां प्रविष्टस्तत्र श्रेणिकस्य योऽग्निभूतस्तत्पुत्रेण पुष्पडालेन दृष्ट्वा स्थापितश्चर्यां कारयित्वा सोमिल्लां निजभार्यां दृष्ट्वा प्रभुपुत्रत्वाद्बालसखित्वाच्च स्तोकं मार्गानुव्रजनं कर्तुं वारिषेणेन सह निर्गतः आत्मनो व्याघुटनार्थं क्षीरवृक्षादिकं दर्शयन् मुहुर्मुहुर्वंदनां कुर्वन् हस्ते धृत्वा नीतो विशिष्टं धर्मश्रवणं कृत्वा तपो गृहीतोपि सोमिल्लां न विस्मरति। तौ द्वावपि द्वादशवर्षाणि तीर्थयात्रां कृत्वा वर्धमानस्वामिसमवसरणे गतौ वर्धमानस्वामिनः पृथिव्याश्च संबंधि गीतं देवैर्गीयमानं पुष्पडालेन श्रुतं। यथा मे इलकुचे णिडुंणिनाहें पवसियण्ण। कहजीवे सइधणिय धरडंजुंतिहियण्ण। एतदात्मनः सोमिल्लां च संयोज्य उक्तं। इतश्चलितः स वारिषेणेन ज्ञात्वा स्थिरीकरणार्थं निजनगरं नीतः चेलिन्या तौ दृष्ट्वा वारिषेणः किंचारित्राच्चलित आग-

च्छतीति संचिंत्य परीक्षार्थं सरागविरागे द्वे आसने दत्ते वीतरागासने वारिषेणेन भणितः इदं मदीयमंतःपुरं युवराजपदं च त्वं गृहाण । तच्छ्रुत्वा पुष्पडालोऽतीव लज्जितः परमवैराग्यं गतः परमार्थेन तपः कर्तुं लग्न इति । ततो वारिषेणो मुक्तिं गतः पुष्पडालश्च स्वर्गे देवो जातः ॥ ६ ॥

---

## कथा ७.

## वात्सल्ये विष्णुकुमारदृष्टांतोऽस्य कथा ।

अवंतिदेशे उज्जयिन्यां श्रीधर्मो राजा तस्य राज्ञी श्रीमती बलिर्बृहस्पतिः प्रल्हादो नमुचिश्चेति चत्वारो मंत्रिणः । तत्रैकदा समस्तश्रुताधारा दिव्यज्ञानिनः सप्तशतमुनिसमन्विता अकंपनाचार्या आगत्योद्यानवने स्थिताः । तैः समस्तसंघश्च वारितः राजन्यकेप्यायाते केनापि जल्पनं न कर्तव्यमन्यथा समस्तसंघस्य नाशो भविष्यतीति । राज्ञा च धवलगृहस्थितेन पूजाहस्तं नगरीजनं गच्छंतं दृष्ट्वा मंत्रिणः पृष्टाः क्वायं लोकोऽकालयात्रायां गच्छतीति तैरुक्तं क्षपणका बहवो बहिरुद्याने आयातास्तत्रायं जनो याति वयमपि तान् द्रष्टुं गच्छामः । इति भणित्वा राजापि तत्र मंत्रिसमन्वितो गतः । प्रत्येकं सर्वे वंदितवंतः । न केनाप्याशीर्वादो दत्तः । दिव्यानुष्ठानेनाऽतिनिस्पृहास्तिष्ठंतीति संचिंत्य व्याघुटिते राज्ञि मंत्रिभिर्दुष्टाभिप्रायैरुपहासः कृतः । बलीवर्दा एते किंचिदपि न जानंति । मूका इव मौनेन स्थिताः एवमुक्त्वा गच्छद्भिरग्रे चर्या

कृत्वा श्रुतसागरमुनिमागच्छंतमालोक्य उत्कमयं तरुणबली-
वर्दः पूर्णकुक्षिरागच्छति एतदाकर्ण्य तेन ते राज्ञोग्रेऽनेकांत-
वादेन जिताः । अकंपनाचार्यस्यागत्य वार्ता कथिता । तेन
चोक्तं । सर्वसंघस्त्वया मारितो यदि वादस्थाने गत्वा रात्रौ
त्वमेकाकी तिष्ठसि तदा संघस्य जीवितव्यं तव शुद्धिश्च
भवतीति । ततोसौ तत्र गत्वा कायोत्सर्गेण स्थितः मंत्रि-
भिश्चातिलज्जितैः क्रोधे रात्रौ संघं मारितुं गच्छद्भिस्तमेकमु-
निमालोक्य येन परिभवः कृतः स एव हंतव्य इति पर्यालोच्य
तद्वधार्थं युगपच्चतुर्भिः खड्गा उद्गूर्णाः । कंपितनगरदेवतया
तथैव ते कीलिताः । प्रभाते तथैव सर्वलोकैर्दृष्टाः । रुष्टेन
राज्ञा क्रमागता इति न मारिताः गर्दभारोहणादिकं कारयित्वा
देशान्निर्धाटिताः । अथ कुरुजांगलदेशे हस्तिनापुरे राजा
महापद्मो राज्ञी लक्ष्मीमती पुत्रौ पद्मो विष्णुश्च । एकदा
पद्माय राज्यं दत्वा महापद्मो विष्णुना सह श्रुतसागरचंद्रा-
चार्यपार्श्वे मुनिर्जातः ते च बलिप्रभृतयः आगत्य पद्मरा-
जस्य मंत्रिणो जाताः कुंभपुरदुर्गे च सिंहबलो राजा दुर्ग-
बलात्पद्ममंडलस्योपद्रवं करोति । एतद्ग्रहणचिंतया पद्मं
दुर्बलमालोक्य बलिनोक्तं किं देवदौर्बल्यकारणमिति कथितं
च राज्ञा तच्छ्रुत्वा आदेशं याचित्वा तत्र गत्वा बुद्धिमा-
हात्म्येन दुर्गं भंक्त्वा सिंहबलं गृहीत्वा व्याघुट्यागतेन पद्मस्य
समर्पितो साध्यः सिंहबल इति श्रुत्वा तेनोक्तं वांछितं वरं
प्रार्थयेति । बलिनोक्तं यदा प्रार्थयिष्यामि तदा दीयतामिति।

अथ कतिपयदिनेषु विहरंतस्तेऽकंपनाचार्यादयः सप्तशतं यतयस्तत्रागताः। पुरक्षोभाद्बलिप्रभृतिभिस्तान्परिज्ञाय राजा एतद्भक्त इति पर्यालोच्य भयात्तन्मारणार्थं पद्मः पूर्ववरार्थं प्रार्थितः। सप्तदिनान्यस्माकं राज्यं देहीति। ततोसौ सप्त-दिनानि दत्त्वांतःपुरे प्रविश्य स्थितः। बलिना च आतपन-गिरौ कायोत्सर्गेण स्थितान्मुनीनावृत्त्यावेष्ट्या मंडपं कृत्वा यज्ञः कर्तुमारब्धः। उत्सृष्टशरावच्छागादिजीवकलेवरैर्धूमैश्च मुनीनां मारणार्थमुपसर्गः कृतः मुनयश्च द्विविधसंन्यासेन स्थिताः। अथ मिथिलानगर्यामर्धरात्रौ बहिर्विनिर्गच्छता श्रुत-सागरचंद्राचार्येण आकाशे श्रवणनक्षत्रं कंपमानमालोक्याव-धिज्ञानेन ज्ञात्वा भणितं। महामुनीनां महोपसर्गो वर्त्तते। तच्छ्रुत्वा पुष्पदंतनाम्ना विद्याधरक्षुल्लकेन पृष्टं भगवन् क्व केषां मुनीनामिति। तेनोक्तम् हस्तिनागपुरे अकंपनादीनां उपसर्ग इति। कथं नश्यति। धरणीभूषणगिरौ विष्णुकुमा-रमुनिर्विक्रियाशुद्धिसंपन्नस्तिष्ठति स नाशयतीति। एतदाकर्ण्य तत्समीपे गत्वा क्षुल्लकेन विष्णुकुमारस्य सर्वस्मिन् वृत्तांते कथिते। मम विक्रियाशुद्धिरस्तीति संचिंत्य तत्परीक्षणार्थं हस्तः प्रसारितः स गिरिं भित्वा दूरे गतः। ततस्तां निर्णीय तत्र गत्वा पद्मराजो भणितः। किं त्वया मुनीनामुपसर्गः कारितो भवत्कुले केनापीदृशं न कृतं किं करोमि मया पूर्वमस्य वरो दत्त इति। विष्णुकुमारमुनिना वामनब्राह्मणरूपं धृत्वा दिव्यध्वनिना प्राऽध्ययनं कृतं। बलिनोक्तं किं तुभ्यं

दीयते तेनोक्तं भूमेः पादत्रयं देहि । अहिलब्राह्मण बहुतर-मन्यत् प्रार्थयेति वारंवारं लोकैर्भण्यमानोपि तावदेव याचिते ततो हस्तोदकादिविधिना भूमिपादत्रये दत्ते । तेनैकपादो मेरौ दत्तो द्वितीयो मानुषोत्तरगिरौ तृतीयपादेन देवविमानादीनां क्षोभं कृत्वा बलिपृष्ठे तं पादं दत्वा बलिं भित्त्वा मुनीनामुपसर्गो निवारितः । ततस्ते चत्वारो मंत्रिणः पद्मश्च भयादागत्य विष्णुकुमारमुनेरकंपनाचार्यादीनां च पादयोर्लग्नास्ते मंत्रिणः श्रावकाश्च जाता इति । व्यंतरदेवैः सुघोषवीणात्रयं दत्तं विष्णुकुमारपादपूजार्थं ॥ ७ ॥

---

## कथा ८.

### प्रभावनायां वज्रकुमारदृष्टांतोऽस्य कथा ।

हस्तिनापुरे बलराजस्य पुरोहितो गरुडस्तत्पुत्रः सोमदत्तः सकलशास्त्राणि पठित्वाऽहिच्छत्रनगरे निजमामसुभूतिपार्श्वे गत्वा भणितं माम मां दुर्मुखराजस्य दर्शय तेन च गर्वितेन न दर्शितः । ततो अहिलो भूत्वा सभायां स्वयमेव तं दृष्ट्वाऽऽशीर्वादं दत्वा सर्वशास्त्रकुशलत्वं प्रकाश्य मंत्रिपदं लब्धवान् । तं तथाभूतमालोक्य सुभूतिमामो यज्ञदत्तां पुत्रीं परिणेतुं दत्तवान् । एकदा तस्या गर्भिण्या वर्षाकाल आम्रफलभक्षणे दोहलको जातस्ततः सोमदत्तेन तान्युद्यानवनेऽन्वेषयता यत्राम्रवृक्षे सुमित्राचार्यो योगं गृहीतवांस्तं नानाफलैः फलितं दृष्ट्वा तस्याम्रानादाय पुरुषहस्ते प्रेषितवान् । स्वयं

च धर्मं श्रुत्वा निर्विण्णस्तपो गृहीत्वाऽऽगममधीत्य परिणतः नाभिगिरावातपनेन स्थितो यज्ञदत्ता च पुत्रं प्रासूत । तं वृत्तांतं श्रुत्वा बंधुसमीपं गताऽस्य शुद्धिं ज्ञात्वा बंधुभिस्सह नाभिगिरिं गत्वा तमाऽतपनस्थितमालोक्यातिकोपात्तत्पादोपरि बालं धृत्वा दुर्वचनानि दत्वा गृहं गता । अत्र प्रस्तावे दिवाकरदेवनामविद्याधरोऽमरावतिपुर्याः पुरंधरनाम्ना लघुभ्रात्रा राज्यान्निर्घाटितः सकलत्रो मुनिं वंदितुमायातः । तं बालं गृहीत्वा निजभार्यायाः समर्प्य वज्रकुमार इति नाम कृत्वा गतः स च वज्रकुमारः कनकगिरौ विमलवाहननिजमैथुनिकसमीपे सर्वविद्यापारगो युवा च क्रमेण जातः । अथ गरुडवेगगंगावत्योः पुत्री पवनवेगा ह्रीमंतपर्वते प्रज्ञप्तिविद्यां श्रमेण साधयन्ती । पवनाकंपितबदरीवक्रकंटकेन लोचने विद्धातस्तत्पीडया चलचित्ता या विद्या न सिध्यति वज्रकुमरेण तां तथा दृष्ट्वा विज्ञानेन कंटक उधृतः ततः स्थिरचित्तायास्तस्या विद्या सिद्धा । उक्तं च तथा भवत्प्रसादेनैषा विद्या मे सिद्धा त्वमेव भर्त्तेत्युक्त्वा तया परिणीतः । वज्रकुमारेण च तद्विद्यां गृहीत्वामरावतीं गत्वा पितृव्यं संग्रामे जित्वा निर्घाट्य दिवाकरदेवो राज्ये धृतः । एकदा जयश्रीजनन्या निजपुत्रराज्यनिमित्तममर्षवहंत्यान्येन जातोऽन्यं संतापयतीत्युक्तं । तच्छ्रुत्वा वज्रकुमारेणोक्तं तात अहं कस्य पुत्र इति सत्यं कथय तस्मिन् कथिते मे भोजनादौ प्रवृत्तिरिति ततस्तेन पूर्ववृत्तांतः सर्वः सत्य एव कथितः । तमाकर्ण्य स निजगुरुं द्रष्टुं बंधुभिस्सह

मथुरायां क्षत्रियगुहायां गतः। तत्र च सोमदत्तगुरोर्दिवाकर-देवेन वंदनां कृत्वा वृत्तांतः कथितः। समस्तबंधून् महता कष्टेन विसृज्य वज्रकुमारो मुनिर्जातः। अत्रांतरे मथुरायामन्या कथा—

राजापूतिगंधो राज्ञी ऊर्व्यसौ च सम्यग्दृष्टिरतीव जिन-धर्मप्रभावनायां रता नंदीश्वराष्टदिनानि प्रतिवर्षं जिनेंद्ररथ-यात्रां त्रीन्वारान् कारयति। तत्रैव नगर्यां श्रेष्ठी सागरदत्तः श्रेष्ठिनी समुद्रदत्ता पुत्री दरिद्रा मृते सागरदत्ते दरिद्रैकदा परगृहे निक्षिप्तसिक्थानि भक्षयंती पुर्यां चर्याप्रविष्टेन मुनि-द्वयेन दृष्टा ततो लघुमुनिनोक्तं हा वराकी महता कष्टेन जीवतीति तदाकर्ण्य ज्येष्ठमुनिनोक्तं। अत्रैवास्य राज्ञः पट्टराज्ञी वल्लभा भविष्यतीति। भिक्षां भ्रमता धर्मश्रीवंदकेन तद्वचन-माकर्ण्य नान्यथा मुनिभाषणमिति संचिंत्य स्वविहारे नीत्वा मिष्टाहारैः पोषिता। एकदा यौवनभरे चैत्रमासे आंदोलयतीं तां राजा दृष्ट्वातीव विरहावस्थां गतः। ततो मंत्रिभिस्तां तदर्थं वंदको याचितस्तेन चोक्तं यदि मदीयं धर्मं राजा गृण्हाति तदा ददामीति तत्सर्वं कृत्वा परिणीता पट्टमहादेवी तस्याती-ववल्लभा जाता। फाल्गुननंदीश्वरयात्रायामुर्विला रथयात्रा-महाटोपं दृष्ट्वा तया भणितं। देव मदीयो बुद्धरथोऽधुना पुर्यां प्रथमं भ्रमयितव्यः। राज्ञा चोक्तमेवमस्त्विति। तत्रो-र्विला वदति। मदीयो रथो यदि प्रथमं न भ्रमति तदा मरणे प्रवृत्तिरिति प्रतिज्ञां गृहीत्वा क्षत्रियगुहायां सोमदत्ताचा-

र्यपार्श्वे गता । तस्मिन् प्रस्तावे वज्रकुमारमुनेर्वंदनाभक्त्यर्थ-
मायाता दिवाकरदेवादयो विद्याधरास्तदीयवृत्तांतं च श्रुत्वा
वज्रकुमारमुनिना ते भणिताउर्विलायाः प्रतिज्ञारूढाय
रथयात्रा भवद्भिः कर्त्तव्येति ततस्तैर्बुद्धदासी रथभंगं कृत्वा
नानाविभूत्या उर्विलाया रथयात्रा कारिता । तमतिशयं दृष्ट्वा
प्रतिबुद्धा बुद्धदास्यन्ये च जना जिनधर्मरता जाता इति ॥

---

## कथा ९.

**ननु सम्यग्दर्शनस्याष्टाभिरंगैः प्ररूपितैः किं प्रयो-
जनं तद्विकलस्याप्यस्य संसारो सामर्थ्यादीत्याशंक्याह-**

**हिंसाविरत्यणुव्रतात् मातंगेन चांडालेनोत्तमः पूजा-
तिशयः प्राप्तोऽस्य कथा ।**

सुरम्यदेशे पोदनपुरे राजा महाबलो नंदीश्वराष्टम्यां राज्ञा-
ष्ट दिनानि जीवामारणघोषणायां कृतायां बलकुमारेण चात्यं-
तमांसासक्तेन कंचिदपि पुरुषमपश्यता राजोद्याने राजकीयमें-
ढकः प्रच्छन्नेन मारयित्वा संस्कार्य भक्षितो राज्ञा च मेंढक-
मारणवार्तामाकर्ण्य रुष्टेन मेंढकमारको गवेषयितुं प्रारब्धः ।
तदुद्यानमालाकारेण च वृक्षोपरि चटितेन स तन्मारणं कुर्वाणो
दृष्टो रात्रौ च निजभार्यायाः कथितं । ततः प्रच्छन्नचरपु-
रुषेणाकर्ण्य राज्ञः कथितं । प्रभाते मालाकारोप्याकारितस्ते-
नैव पुनः कथितं मदीयामाज्ञां मम पुत्रः खंडयतीति । रुष्टेन

राज्ञा कोट्टपालो भणितो बलकुमारं नवखंडं कारयेति। ततस्तं कुमारं मारणस्थानं नीत्वा मातंगमानेतुं ये गताः पुरुषास्तान्विलोक्य मातंगेनोक्तं । प्रिये मातंगो ग्रामं गत इति कथय त्वमेतेषामित्युक्त्वा गृहकोणे प्रच्छन्नो भूत्वा स्थितः । तलारैश्चाकारिते मातंगे कथितं मातंग्या सोद्य ग्रामं गतः । भणितं च तलारैः स पापो पुण्यवानद्य ग्रामं गतः कुमारमारणात्तस्य बहुसुवर्णरत्नादिलाभो भवेत् । तेषां वचनमाकर्ण्य द्रव्यलुब्धतया हस्तसंज्ञया स दर्शितो ग्रामं गत इति पुनःपुनर्भणंत्या ततस्तैस्तं गृहान्निःसार्य तस्य मारणार्थं स कुमारः समर्पितस्तेन चोक्तं । नास्य चतुर्दशीदिने जीवघातं करोमि । ततस्तलारैः स नीत्वा राज्ञः कथितो देवायं राजकुमारं न मारयति । तेन च राज्ञः कथितं सर्पदष्टो मृतः स्मशाने निक्षिप्तः सर्वोषधिमुनिशरीरस्य वायुना पुनर्जीवितोहं तत्पार्श्वे चतुर्दशीदिवसे मया जीवाहिंसाव्रतं गृहीतमतोद्य न मारयामि। देवो यज्जानाति तत्करोतु। अहो अस्पृश्यचांडालस्य व्रतमिति संचित्य रुष्टेन राज्ञा द्वावपि गाढं बंधयित्वा शिंशुमारन्हदे निक्षेपितौ। तत्र मातंगस्य प्राणात्ययेप्यहिंसाव्रतमपरित्यजतो व्रतमाहात्म्याज्जलदेवतया जलमध्ये सन्मणिमंडपिकादुंदुभिसाधुकारादिप्रातिहार्यादिकं कृतं । महाबलराजेन चैतदाकर्ण्य भीतेन पूजयित्वा निजच्छत्रतले स्नापयित्वा स स्पृश्यो विशिष्टः कृत इति ।

---

## कथा १०.

अनृतविरत्यणुव्रताद्धनदेवश्रेष्ठिना पूजातिशयः प्राप्तः। अस्य कथा।

जंबूद्वीपे पूर्वविदेहे पुष्कलावतीविषये पुंडरीकिन्यां पुर्यां वणिजौ जिनदेवधनदेवौ स्वल्पद्रव्यौ। तत्र धनदेवः सत्यवादी द्रव्यस्य लाभं द्वावप्यर्द्धमर्द्धं गृहीष्याव इति निःसाक्षिकां व्यवस्थां कृत्वा दूरदेशं गत्वा बहुद्रव्यमुपार्ज्य व्याघुट्य कुशलेन पुंडरीकिन्यामायातौ। तत्र जिनदेवो लाभार्धं धनदेवाय न ददाति। स्तोकद्रव्यमौचित्येन ददाति। ततो झकटके न्याये वसतिस जनमहाराजाग्रतो निःसाक्षिकव्यवहारबलात् जिनदेवो वदति न मयास्य लाभार्द्धं भणितमुचितमेव भणितं। धनदेवश्च सत्यमेव वदति * द्वयोरर्द्धमेव। ततो राजनियमात्तयोर्द्रव्यं दत्तं। धनदेवः शुद्धो नेतरस्ततः सर्वं द्रव्यं धनदेवस्य समर्पितं। तथा सर्वैः पूजितः साधुकीरितश्चेति। द्वितीयाणुव्रतस्याचौर्यविरत्यणुव्रताद्वारिषेणेन पूजातिशयः प्राप्तः। स्थितिकरणव्याख्यानप्रघट्टके कथितेह द्रष्टव्येति * तृतीयाणुव्रतस्य ॥ १० ॥

---

## कथा ११.

ततः परं नीलिजयश्च ततस्तेभ्यस्त्रिभ्यः परं यथाभवत्येवं पूजातिशयं प्राप्तः। तत्राब्रह्मविरत्यणुव्रतान्नीलिका वणिक्पुत्री पूजातिशयं प्राप्ता। अस्याः कथा।

लाटदेशे भृगुकच्छपत्तने राजा वसुपालो वणिक् जिनदत्तो भार्या जिनदत्ता पुत्री नीलयतिशयेन रूपवती तत्रैवापरः श्रेष्ठी समुद्रदत्तो भार्या सागरदत्ता पुत्रो सागरदत्त एकदा महापूजायां सत्यां कायोत्सर्गस्थितां सर्वाभरणभूषितां नीलीमालोक्य सागरदत्तेनोक्तं किमेषा देवता काचिदेतदाकर्ण्य तन्मित्रेण प्रियदत्तेन भणितं। जिनदत्तश्रेष्ठिन इयं पुत्री नीली। ततस्तद्रूपावलोकनादतीवासक्तो भूत्वा कथमियं प्राप्यत इति तत्परिणयनचिंतया दुर्बलो जातः। समुद्रदत्तेन चैतदाकर्ण्य भणितं हे पुत्र जैनं मुक्त्वान्यस्मै जिनदत्तो न ददातीति। पुत्रिकां परिणेतुमिति। ततस्तौकपटेन श्रावकौ जातौ। परिणीता ततः पुनस्तौ बुद्धभक्तौ जातौ नील्याश्च पितृगृहे गमनमपि निषिद्धं। एवं जाते भणितं जिनदत्तेनेयं ममात्मजा कूपादौ वा पतिता यमेन वा नीता इति। नीली च श्वशुरगृहे भर्त्तुर्वल्लभा विभिन्नगृहे जिनधर्ममनुतिष्ठति। दर्शनसंसर्गात् वचनधर्मादेवाकर्णनाद्वा बुद्धभक्ता भविष्यतीति पर्यालोच्य समुद्रदत्तेन भणिता। नीली पुत्री वंदकानां ज्ञानिनामस्मदर्थं भोजनं देहि। ततस्तया वंदकानामिक्यादरेण च तेषामेका प्राणहितातिमृष्टा संस्कार्य तेषामेव भोक्तुं दत्ता तैर्भोजनं भुक्त्वा गच्छद्भिः पृष्टं क्व प्राणहिता तयोक्तं भवंत एव जानंतु। यत्र तास्तिष्ठंति परिज्ञानादिपुनर्ज्ञानं नास्ति तदा वमनं कुर्वंतु भवतामुदरे प्राणहितास्तिष्ठंतीति एवं वमने कृते दृष्टानि प्राणहिताखंडानि

ततो रुष्टश्च श्वशुरपक्षजनस्ततः सागरदत्तभगिन्यादिभिः कोपात्तस्या असत्यपरपुरुषदोषोद्भावना कृता तस्मिन् दोषे प्रसिद्धं गते सा नीली देवाग्रे संन्यसनं गृहीत्वा कायोत्सर्गेण स्थिता। दोषोत्तरे भोजनादौ प्रवृत्तिर्मम नान्यथेति। ततः क्षुभितनगरदेवतयागत्य रात्रौ सा भणिता। हे महामति मा प्राणत्यागमेवं कुरु। अहं राज्ञः प्रधानानां पुरजनस्य च स्वप्नं ददामि। लग्ना यथा नगरप्रतोल्यः कीलिता महासती-वामचरणेन स्पृष्टोद्घटिष्यतीति पादेन प्रतोलिस्पर्शं कुर्या-स्त्वमिति भणित्वा राजादीनां स्वप्नं दर्शयित्वा प्रतोलीः कीलित्वा स्थिता सा नगरदेवता। प्रभाते कीलितां प्रतोलीं दृष्ट्वा राजादिभिस्तं स्वप्नं स्मृत्वा नगरसर्वस्त्रीचरणताडनं प्रतोली-नां कारितं न चैकापि प्रतोलिः कयाचिदप्युद्घाटिता सर्वासां पश्चान्नीली तत्रोत्क्षिप्यानीता तच्चरणस्पर्शात् सर्वा अप्युद्घा-टिताः प्रतोल्यो। निर्दोषा राजादिपूजिता च नीली जाता। चतुर्थाणुव्रतस्य ॥ ११ ॥

---

## कथा १२.

### परिग्रहविरत्यणुव्रताज्जयः पूजातिशयं प्राप्तोऽस्य कथा।

कुरुजांगलदेशे हस्तिनागपुरे कुरुवंशे राजा सोमप्रभः पुत्रो जयः *परिमितपरिगृहोऽस्य भार्या सुलोचना तस्यामेव प्रवृत्तिः। एकदा पूर्वविद्याधरभवकथनानंतरं समायातपूर्वज-

न्माद्यो हिरण्यवर्मप्रभावती विद्याधररूपमादाय मेर्वादौ वंदनाभक्तिं कृत्वा कैलासगिरौ भरतप्रतिष्ठापितचतुर्विंशतिजिनालयान् वंदितुमायातौ सुलोचनाजयौ । तत्प्रस्तावे सौधर्मेण जयस्य स्वर्गे परिग्रहप्रमाणप्रशंसा कृता। तं परीक्षितुं रतिप्रभदेवः समायातः । ततः स्त्रीरूपमादाय चतसृभिर्विलासिनीभिस्सह जयसमीपं गत्वा भणितो जयः । सुलोचनास्वयंवरे येन त्वया महासंग्रामः कृतस्तस्य नमिविद्याधराधिपते राज्ञः सुरूपामभिनवयौवनां सर्वविद्याधारिणीं तद्विरक्तचित्तां मामिच्छ यदि तस्य राज्यमात्मजीवितं च वांछसीति । एतदाकर्ण्य जयेनोक्तं हे सुंदरि मैवं ब्रूहि परस्त्री मम जननीसमानेति ततस्तया जयस्योपसर्गे महति कृतेपि स न चलितः ततो मायामुपसंहृत्य पूर्ववृत्तांतं कथयित्वा प्रशस्य वस्त्रादिभिः पूजयित्वा स्वर्गं गत इति श्रीपंचाणुव्रतस्य ॥ १२ ॥

---

## कथा १३.

**एवं पंचानामहिंसादिव्रतानां प्रत्येकं गुणं प्रतिपाद्येदानीं तद्विपक्षभूतानां हिंसादिव्रतानां दोषं दर्शयितुमाह)तत्र धनश्रीर्हिंसातो बहुदुःखं प्राप्तेति । अस्याः कथा ।**

लाटदेशे भृगुकच्छपत्तने राजा लोकपालो वणिक् धनपालो भार्या धनश्रीर्मनागपि न जीववधविरता । तत्पुत्री सुंदरी पुत्रो गुणपालः पुत्रकाले धनश्रिया यः पुत्रबुद्ध्या कुंडलनामा बालकः

पोषितः । धनपाले मृते तेन सह धनश्रीः कुकर्मरता संजाता। गुणपाले च गुणदोषपरिज्ञायके जाते धनश्रिया सक्ततया भणितः कुंडल प्रसरे गोधनं चारयितुमटव्यां गुणपालं प्रेषयामि त्वं तत्र तं मारय येनावयोर्निरंकुशमवस्थानं भवतीति ब्रुवाणां मातरमाकर्ण्य सुंदर्या गुणपालस्य कथितं । अद्य रात्रौ गोधनं गृहीत्वा प्रसरे त्वामटव्यां प्रेषयित्वा कुंडलहस्तेन माता मारयिष्यति । अतः सावधानो भवेस्त्वमिति । धनश्रिया च रात्रिपश्चिमप्रहरे गुणपालो भणितः। हे पुत्र कुंडलस्य शरीरं विरूपकं वर्ततेऽतः प्रसारणे गोधनं गृहीत्वाद्य व्रजेति । स गोधनमटव्यां नीत्वा काष्ठं वस्त्रेण पिधाय तिरोहितो भूत्वा स्थितः कुंडलेनागत्य गुणपालोयमिति मत्वा वस्त्राच्छादितकाष्ठे घातः कृतः गुणपालेन च खड्गेन हत्वा मारितो गृहमागतो गुणपालो धनश्रिया पृष्टः क रे कुंडलस्तेन चोक्तं । कुंडलवार्त्तामयं खड्गो जानाति ततो रक्तं खड्गमालोक्य स तेनैव खड्गेन मारितस्तं च मारयंतीं धनश्रियं दृष्ट्वा सुंदर्या मुसलेन सा हता कोलाहले जाते कोट्टपालैर्धनश्रीर्धृत्वा राज्ञोऽग्रे नीता राज्ञा च गर्दभारोहणं कर्णनासिकादिछेदनादिविकारे कारिते मृत्वा दुर्गतिं गतेति । प्रथमाव्रतस्य ॥ १३ ॥

---

## कथा १४.

### सत्यघोषोऽनृताद्बहुदुःखं प्राप्त इत्यस्य कथा।

जंबूद्वीपे भरते सिंहपुरे राजा सिंहसेनो राज्ञी रामदत्ता

पुरोहितः श्रीभूतिः स ब्रह्मसूत्रे कर्त्तिकां बध्वा भ्रमति वदति च । यदसत्यं ब्रवीमि तथाऽनया कर्त्तिकया निजजिह्वाच्छेदं करोमि । एवं कपटेन वर्तमानस्य तस्य सत्यघोष इति द्वितीयं नाम जातं लोकाश्च विश्वस्तास्तस्य पार्श्वे द्रव्यं धारयंति । स च तत् द्रव्यं किंचित्तेषां समर्प्य स्वयं गृह्णाति । फूत्कर्तुं बिभेति लोको न च फूत्कृतं राजा शृणोति । अथैकदा पद्मखंडपुरादागत्य भद्रमित्रसमुद्रदत्तो वणिक्पुत्रस्तत्र सत्यघोषसमीपेऽनर्घ्याणि पंचमाणिक्यानि धृत्वा परतीरे द्रव्यमुपार्जयितुं गतः । तत्र च तदुपार्ज्य व्याघुटितः स्फुटितप्रवहण एकफलकेनोत्तीर्य समुद्रं धृतमाणिक्यवांछया सिंहपुरे सत्यघोषसमीपमायातः । तं च रंकसमानमागच्छंतमालोक्य तन्माणिक्यहरणार्थिना सत्यघोषेण प्रत्ययपूरणार्थं समीपोपविष्टपुरुषाणां कथितं । अयं पुरुषः स्फुटितप्रवहणस्ततो ग्रहिलो जातोऽत्रागत्य माणिक्यानि याचिष्यतीति । तेनागत्य प्रणम्य चोक्तं भो सत्यघोष पुरोहित ममार्थोपार्जनार्थं गतस्योपार्जनार्थस्य महाननर्थो जात इति मत्वा यानि मया तव रत्नानि धर्तुं समर्पितानि तानीदानीं प्रसादं कृत्वा देहि । येनात्मानं स्फुटितप्रवहणात् गतद्रव्यं समुद्धरामि । तद्वचनमाकर्ण्य कपटेन सत्यघोषेण समीपोपविष्टा जना भणिता मया प्रथमं यद्भणितं तद्भवतां सत्यं जातं । तैरुक्तं भवंत एव जानंत्ययं ग्रहिलो स्यात् । स्थानान्निस्सार्यतामित्युक्त्वातो समुद्रदत्तो गृहान्निस्सारितो ग्रहिल इति भण्यमानः । पत्तने फूत्कारं कुर्वन्ममानर्घ्यपंच-

माणिक्यानि सत्यघोषेण गृहीतानि तथा राजगृहसमीपचिंचा-
वृक्षमारुह्य पश्चिमरात्रौ फूत्कृतिं कुर्वन् षण्मासान् स्थित-
स्तां फूत्कृतिमाकर्ण्य रामदत्तया भणितः सिंहसेनो देव नायं-
पुरुषो ग्रहिलो राज्ञापि भणितं किं सत्यघोषस्य चौर्यं संभाव्य
तेन पुनरुक्तं राज्ञा । देव संभाव्यते तस्य चौर्यं यतोयमेतादृ-
शमेव सर्वदा वचनं ब्रवीति । एतदाकर्ण्य भणितं राज्ञा यदि
सत्यघोषस्यैतत् संभाव्यते तदा परीक्षयेति लब्धादेशया
रामदत्तया सत्यघोषो राजसेवार्थमागच्छन् कार्यपृष्टः किं
बृहद्वेलायामागतोसि।तेनोक्तं । मम ब्राह्मणीभ्राताद्य प्राघू-
र्णकःसमायातस्तं भोजयतो बृहद्वेलाजातेति । पुनरप्युक्तं तया
क्षणमेकमत्रोपविश ममातिकौतुकं जातमक्षक्रीडां कुर्मो राजा
तत्रैवागतस्तेनाप्येवं कुर्वित्युक्तं । ततोऽक्षद्यूते क्रीडया संजा-
ते रामदत्तया निपुणमतिविलासिनीकर्णे लगित्वा भणिता ।
सत्यघोषपुरोहितो राज्ञीपार्श्वे तिष्ठति तेनाहं ग्रहिलमाणि-
क्यानि याचितुं प्रेषितेति तद्ब्राह्मण्यग्रे भणित्वा तानि याचि-
तानि गृहीत्वा च शीघ्रमागच्छेति । ततस्तया गत्वा तानि
याचितानि तानि तद्ब्राह्मण्या च पूर्वं सुतरां निषिद्धया न
दत्तानि तद्विलासिन्या चागत्य देवीकर्णे कथितं । सा न ददा-
तीति । ततो जितमुद्रिकां तस्य साभिज्ञानं दत्ता पुनः प्रेषि-
ता तथापि तया न दत्तानि ततस्तस्य कर्तिका यज्ञोपवीतं
जितं साभिज्ञानं दत्वा दर्शितं च तया तत् ब्राह्मण्या तद्दर्श-
नात् हृष्टया भीतया च समर्पितानि माणिक्यानि तद्विलासिन्या।

तया च रामदत्तायाः समर्पितानि। तया च राज्ञो दर्शितानि। तेन च बहुमाणिक्यमध्ये निक्षिप्याकार्य गृहीलो भणितः। रे निजमाणिक्यानि परिज्ञाय गृहाण तेन च तथैव गृहीतेषु तेषु राज्ञा रामदत्तया च पुत्रः प्रतिपन्नस्ततो राज्ञा सत्यघोषः पृष्ट इदं कर्म त्वया कृतं न वेति तेनोक्तं देव न करोमि किं ममेदृशं कर्तुं युज्यते ततोतिरुष्टेन राज्ञा तस्य दंडत्रयं कृतं गोमयभृतं भाजनत्रयं भक्षय मल्लमुष्टिघातत्रयं सहस्व द्रव्यं वा सर्वं देहि तेन पर्यालोच्य गोमयं खादितुमारब्धं तदशक्तेन मुष्टिघातं सहितुमारब्धं तदशक्तेन द्रव्यं दातुमारब्धं तदशक्तेन गोमयभक्षणं मुष्टिघात इत्येवं दंडत्रयमनुभूय मृत्वाऽतिलोभवशाद्राजकीयभांडागारेऽगंधसर्पो जातस्तत्रापि मृत्वा दीर्घसंसारी जात इति श्रीद्वितीयाव्रतस्य ॥ १४ ॥

---

## कथा १५.

### तापसश्चौर्यात् बहुदुःखं प्राप्त इत्यस्य कथा।

वत्सदेशे कौशांबीपुरे राजा सिंहरथो राज्ञी विजया। तत्रैकश्चोरः कौटिल्येन तापसो भूत्वा परं भूमिमस्पृशन् विलंब्यमानसिक्यस्थो दिवसे पंचाग्निसाधनं करोति रात्रौ कौशांबीं मुषित्वा तिष्ठति। एकदा राज्ञा महाजनान्नगरचौर्यमाकर्ण्य कोट्टपालो भणितः। रे सप्तरात्रिमध्ये चोरं निजशिरो वानय। ततश्चोरमलभमानश्चिंतापरोपराह्ले बुभुक्षि-

तत्र ब्राह्मणेन केनचिदागत्य भोजनाय प्रार्थितस्तेनोक्तं ब्राह्मण छंदसोसि। मम प्राणसंदेहो वर्तते त्वं च भोजनं प्रार्थयस एतद्व-चनमाकर्ण्य पृष्टो ब्राह्मणेन कुतस्ते प्राणसंदेहः। कथितं च तेन। तदाकर्ण्य पुनः पृष्टं ब्राह्मणेनात्र किं कोप्यतिनिस्पृहवृत्तिः पुरुषोस्ति। उक्तं तलवरेणास्ति विशिष्टतपस्वी न च तस्यैतत् संभाव्यते भणितं ब्राह्मणेन स एव चोरो भविष्यतीति। निस्पृहत्वात्। श्रूयतां मदीयकथा। मम ब्राह्मणी महासती परपुरुषशरीरं न स्पृशतीति निजपुत्रस्याप्यतिकुत्कुटात्कर्पटेन सर्वशरीरं प्रच्छाद्य स्तनं ददाति। रात्रौ पिंडाकारेण[1] सह कुकर्म करोति। तद्दर्शनात्संजातवैराग्योहं शांबलार्थसुवर्ण-शलाकां यष्टिमध्ये निक्षिप्य तीर्थयात्रायां निर्गतोग्रे गच्छत-श्च ममैकबटुको मिलितो न च तस्य विश्वासं गच्छाम्यहं यष्टिरक्षां यत्नतः करोमि तेनाकलितां तां यष्टिं संगे बिभर्मि। एकदा रात्रौ कुंभकारगृहे निद्रां कृत्वा दूरं गत्वा तेन निज-मस्तके लग्नं कुथितं तृणमालोक्यातिकुत्कुटेनोक्तं ममाग्रतो हाहा मया परतृणमदत्तं हिंसितं। इत्युक्त्वा व्याघुट्य तृणं तत्रैव कुंभकारगृहे निक्षिप्य दिवावसाने कृतभोजनस्य समा-गत्य मिलितः। भिक्षार्थं गच्छ तस्यातिशुचिरयमिति मत्वा विश्वसितेन मया सा यष्टिः कुक्कुरादिनिवारणार्थं समर्पिता। तां गृहीत्वा स गतः। ततो मया महाटव्यां गच्छतातिवृद्ध-पक्षिणोऽतिकुत्कुटं दृष्टं यथैकस्मिन्महति वृक्षे मिलिताः

---

१ गोपालेन.

पक्षिणो रात्रौ एकेनातिवृद्धपक्षिणा निजभाषया भणितः । रे रे पुत्रा अहमतीव गंतुं न शक्नोमि बुभुक्षितश्चलमनाः कदाचिद्भवत्पुत्राणां भक्षणं करोमि चित्तचांचल्यात् । अतो मम मुखं प्रभाते बध्वा सर्वेपि गच्छंतु तैरुक्तं हाहा तात पितामह त्वयि किं तत्संभाव्यते तेनोक्तं बुभुक्षितः किं न करोति पापम् । एवं प्रभाते पुनस्तस्य वचनात्तन्मुखं बध्वा गताः । स च वृद्धो गतेषु तेषु चरणाभ्यां मुखबंधनमुत्तार्य ततः पुत्रकान् भक्षयित्वा तेषामागमनसमये पुनश्चरणाभ्यां मुखे संयोज्यातिकुत्कुटेन क्षीणोदरो भूत्वा पतित्वा स्थितः । ततो नगरगतेन चतुर्थमतिकुत्कुटं दृष्टं यथा तत्र नगरे एकश्चोरस्तपस्वीरूपं धृत्वा बृहच्छिलां च मस्तकस्योपरि हस्ताभ्यामूर्ध्वं कृत्वा नगरमध्ये दिवा रात्रौ चातिकुत्कुटेनापसरजीवपदं ददाम्यपसरजीवपदं ददामीति भणन् भ्रमत्यपसर जीव इति चासावतिक्तः सर्वजनैर्भण्यते स च गर्तादिविजनस्थाने दिगवलोकनं कृत्वा सुवर्णभूपितमेकाकिनं प्रणमंतं तया शिलया मारयित्वा तद्द्रव्यं गृह्णाति । इत्येतिकुत्कुटचतुष्टयमालोक्य मया श्लोकोयं कृतः । बालमस्पर्शिका नारी ब्राह्मणो तृणहिंसकः । वने काष्ठमुखः पक्षी नगरे चापसरजीव इति ॥ १ ॥ इति कथयित्वा तलवरं धीरयित्वा संध्यायां स ब्राह्मणः सिक्यतपस्वीसमीपं गतः। तपसि प्रतिचारकैर्निर्घाट्यमानो रात्र्यंधो भूत्वा तत्र पतित्वैकदेशे स्थितस्ते च प्रतिचारका अन्धपरीक्षणार्थं तृणक-

ठिकांगुल्यादिकं तस्याक्षिसमीपं नयंति स च पश्यन्नपि न पश्यति। बृहद्रात्रौ गुहायामंधकूपे च नगरद्रव्यं ह्रीयमाणमालोक्य तेषां खानपानस्थ्यादिकं चालोक्य प्रभाते राज्ञा मार्यमाणस्तलवरो रक्षितस्तेन रात्रिदृष्टिमावेद्य स सिक्यस्थे तपस्विचौरस्तेन तलवरेण बहुकदर्थनाभिकदर्थ्यमानो मृत्वा दुर्गतिं गतः। इति तृतीयात्रतस्य ॥

---

## कथा १६.

### अरक्षकेर्नात्रह्मनिवृत्त्याभावाद्दुःखं प्राप्तमस्य कथा।

अहीरदेशे नासिक्यनगरे राजा कनकरथो राज्ञी कनकमाला। तलवरो यमदंडो माता तस्य वसुंधरी तरुणरंडा पुंश्चली। एकदा सा वध्वा धर्तुं समर्पिताभरणं गृहीत्वा रात्रौ संकेतितजारपार्श्वे गच्छंती यमदंडेन दृष्टा। सेविता चैकांते तदाभरणं चानीय तेन निजभार्याया दत्तं। तथा च दृष्ट्वा भणितं। मदीयमाभरणं मया श्वश्रूहस्ते धृतं। तद्वचनमाकर्ण्य तेन चिंतितं। या मया सेविता सा मम जननी भविष्यतीति। ततस्तस्या जारसंकेतगृहं गत्वा तां सेवित्वा तस्यां महासक्तो गूढवृत्त्या तया सह कुकर्मरतस्थितः। एकदा तद्भार्यया सहातिरुष्टया रजक्या कथितं मम भर्ता निजमात्रा सह तिष्ठति रजक्या च मालाकारिण्यै कथितमति विश्वासान्मालाकारिणी च कनकमालाराज्ञीनिमित्तं पुष्पाणि गृहीत्वा गता तया च पृष्टा सा कुतूहलेन जानासि ह्येका-

मप्यपूर्ववार्ता तया च तलवरद्विष्टया कथितं राज्या देवि यमदंडतलवरो निजजनन्या सह तिष्ठति कनकमालया राज्ञः कथितं राज्ञा च गुप्तपुरुषद्वारेण कुकर्म निश्चितं स तलवरो निगृहीतो दुर्गतिं गतः । इति चतुर्थाव्रतस्य ॥

---

## कथा १७.

### परिग्रहनिवृत्यभावात् श्मश्रूनवनीतेन बहुतरं दुःखं प्राप्तमस्य कथा ।

अत्रायोध्यायां श्रेष्ठी भवदत्तो भार्या धनदत्ता पुत्रो लुब्धदत्तः स चैकदा वाणिज्येन दूरं गतः। तत्र समुपार्जितं द्रव्यं तत्तस्य चोरैर्नीतं ततो निर्धनेनैकेन मार्गे आगच्छता एकदा गोकुले तक्रपात्रं याचितं तस्मिन् पीते स्तोकं नवनीतं कूर्चे लग्नं आलोक्य गृहीत्वा चिंतितं तेन वाणिज्यं भविष्यत्यनेन एवं संचितयतस्तस्य श्मश्रूनवनीतमिति नाम जातं। एवमेकदा प्रस्थप्रमाणे घृते जाते तस्य घृतस्य भाजनं पादांते धृत्वा शीतकाले तृणं कृत्वा रात्रौ प्रस्तरे पतितः । संचितयत्यनेन घृतेन बहुतरमर्थमुपार्ज्य सार्थवाहो भूत्वा सामंतमहासामंतराज्यपदं प्राप्य क्रमेण सकलचक्रवर्ती भविष्यामि यदा तदा च मे सप्ततलप्रासादे शय्यागतस्य पादांते तदुपविष्टं स्त्रीरत्नं पादौ मुष्ट्या ग्रहिष्यति न जानासि पादमर्दनं कर्तुमिति स्नेहेन भणित्वा स्त्रीरत्नमेवं पादेन ताडयिष्याम्येवं चिंतयतानेन चक्रवर्त्तिरूपाविष्टेन पादेन हत्वा पतितं तद्घृतभाजनं तेन च घृतेन द्वारे संधुक्षितोग्निः सुतरां प्रज्वा-

लितः । ततो द्वारे प्रज्वलिते निःसर्त्तुमशक्तो दग्धो मृतो दुर्गतिं गत इच्छाप्रमाणरहितः पंचमाव्रतस्य ॥

---

## कथा १८.

### तत्राहारदाने श्रीषेणो दृष्टांतस्तस्य कथा ।

मलयदेशे रत्नसंचयपुरे राजा श्रीषेणो राज्ञी सिंहनंदिता । द्वितीयाऽनिंदिता च पुत्रौ क्रमेण तयोरिंद्रोपेंद्रौ तत्रैव ब्राह्मणः सत्यकी नाम ब्राह्मणी जंबू पुत्री सत्यभामा पाटलिपुत्रनगरे ब्राह्मणो शूद्रभट्टो बटुकान् वेदं पाठयति । तदीयचेटिकापुत्रश्च कपिलनामा तीक्ष्णमतित्वादाकर्णनज्ञस्या वेदं शृण्वानस्तत्पारगो जातो रुद्रभट्टेन कुपितेन पाटलिपुत्रो निर्धाटितः सोत्तरीययज्ञोपवीतं परिधाय ब्राह्मणो भूत्वा रत्नसंचयपुरे गतः सात्यकिना च तं वेदपारगं सुरूपं च दृष्ट्वा सत्यभामाया योग्योयमिति सा तस्मै दत्ता । सत्यभामा च रतिसमये विटचेष्टां तस्य दृष्ट्वा कुलजोयं न भविष्यतीति सा संप्रधार्य चित्ते विषादं वहंती तिष्ठति । एतस्मिन् प्रस्तावे रुद्रभट्टस्तीर्थयात्रां कुर्वाणो रत्नसंचयपुरे समायातः कपिलेन प्रणम्य निजधवलगृहे नीत्वा भोजनपरिधानादिकं कारयित्वा सत्यभामायाः सकललोकानां च मदीयोयं पितेति कथितं । सत्यभामया चैकदा रुद्रभट्टस्य विशिष्टभोजनं बहु सुवर्णं च दत्वा पादयोर्लगित्वा पृष्टं तात तव शीलस्य लेशोपि कपिले नास्ति ततः किमयं तव पुत्रो भवति न चेति सत्यमेव

कथय । ततस्तेन कथितं पुत्रि मदीयचेटिकापुत्र इति । एतदाकर्ण्य तदुपरि विरक्ता । सा हठादयं मामभिगमिष्यतीति मत्वा सिंहनंदिताग्रमहादेव्याः शरणं प्रविष्टा तया च सा पुत्रीति प्रतिज्ञातैव । एकदा श्रीषेणराजेन परमभक्त्या विधिपूर्वकमर्ककीर्त्या नितरां चारणमुनिभ्यां दानं दत्तं तत्फलेन राज्ञा सह भोगभूमावुत्पन्ना तदनुमोदनासत्यभामापि तत्रैवोत्पन्ना । स राजा श्रीषेणो दानप्रथमकारणात्पारंपर्येण शांतिनाथतीर्थंकरो जातः ॥

---

## कथा १९.

### औषधदाने वृषभसेनादृष्टांतोऽस्याः कथा ।

जनपददेशे कावेरीपत्तने राजोग्रसेनः श्रेष्ठी धनपतिर्भार्या धनश्री पुत्री वृषभसेना तस्या धात्री रूपवती नाम्न्येकदा वृषभसेना स्नानजलगर्त्तायां रोगगृहीतं कुक्कुरं पतितलुठितोत्थितं रोगरहितमालोक्य चिंतितं धात्र्या पुत्री स्नानजलमेवात्रारोग्यत्वे कारणं ततस्तया धात्र्या निजजनन्या द्वादशवार्षिकाक्षिरोगगृहीताया रुधिते तया लोचने तेन जलेन परीक्षणार्थमेकदिने धौते दृष्टी च शोभने जाते ततः सर्वरोगापनयने सा धात्री प्रसिद्धा तत्र नगरे जाता । एकदोग्रसेनेन रणपिंगलमंत्री बहुसैन्योपेतो मेघपिंगलराजस्योपरि प्रेषितः स च तं देशं प्रविष्टो विषस्यैकस्य सेवनात् ज्वरेण गृहीतः स च व्याघुट्या गतः रूपवत्या च तेन जलेन

निरोगी कृतः । उग्रसेनोपि कोपात्तत्र गतस्तथा ज्वरितो व्याघुटद्या गतो रणपिंगलाज्जलवृत्तांतमाकर्ण्य तज्जलं याचितवान् ततो मंत्र उक्तो धनश्रिया भो श्रेष्ठिन् कथं नरपतेः शिरसि पुत्री स्नानजलं क्षिप्यते । धनपतिनोक्तं । यदि पृच्छति राजा जलस्वभावं तदा सत्यं कथ्यते न दोषः । एवं भणिते रूपवत्या तेन जलेन निरोगीकृतः । उग्रसेन स्ततो निरोगेण राज्ञा पृष्टा रूपवती जलस्य माहात्म्यं । तया च सत्यमेव कथितं ततो राज्ञा व्याहृतः श्रेष्ठी स च भीतो राजसमीपमायातो राजा च गौरवं कृत्वा वृषभसेनां परिणेतुं स याचितस्ततः श्रेष्ठिना भणितं देव यद्याष्टाह्निकां पूजां। जिनप्रतिमानां करोषि तथा पंजरस्थान् पक्षिणश्चेन्मुंचसि । तथा गुप्तिषु सर्वमनुष्यांश्च मुंचसि तदा ददाम्युग्रसेनेन च तत्सर्वं कृत्वा परिणीता वृषभसेना पट्टराज्ञी च कृताऽतिवल्लभया तयैव च सह विमुक्तान्यकार्यक्रीडः एतस्मिन् प्रस्तावे यो वाराणस्यां पृथिवीचंद्रो नाम राजा धृत आस्ते । सोऽतिप्रचंडत्वात् तद्विवाहकालेपि न मुक्तः । ततस्तस्य राज्ञी नारायणदत्ता तया मंत्रिभिस्सह मंत्रयित्वा पृथिवीचंद्रमोचनार्थं वाराणस्यां सर्वत्रावारितसत्कारा वृषभसेना राज्ञी नाम्नी कारिता तेषु भोजनं कृत्वा कावेरीपत्तने गतास्तेन ब्राह्मणादिभ्यस्तद्वृत्तांतमाकर्ण्य रुष्टया रूपवत्या भणिता वृषभसेने त्वं मामपृच्छती वाराणस्यां कथं सत्कारान् कारयसि तया भणितं न च कारयाम्यहं किंतु मंत्रिणस्ते केनचित्कारणेन केनापि कारितास्तेषां शुद्धिं कुरु त्वमिति

चारपुरुषैः कृत्वा यथार्थं ज्ञातया वृषभसेनयाऽथ सर्वं कथितं तया च राजानं विज्ञाप्य मोचितः पृथिवीचंद्रस्तेन च चित्रफलके वृषभसेनोग्रसेनयोरूपं कारितं तयोरधो निजरूपं सप्रणामं कारितं सफलकस्तयोर्दर्शितो भणिता च वृषभसेना राज्ञी त्वं मम मातासि त्वत्प्रसादादिदं जन्म सफलं मे जातं ततः उग्रसेनः सन्मानं दत्वा भणितवान् त्वया मेघपिंगलस्योपरि गंतव्यमिति स च ताभ्यां वाराणसीं प्रेषितः मेघपिंगलोप्येतदाकर्ण्य ममायं पृथिवीचंद्रो मर्मभेदीति पर्यालोच्यागत्य चोग्रसेनस्यातिप्रसादितसामंतो जातः उग्रसेनेन चास्थानस्थितस्य यन्मे प्राभृतमागमिष्यति तस्यार्धं मेघपिंगलस्य दास्याम्यर्धं च वृषभसेनाया इति व्यवस्था कृता। एवमेकदा रत्नकंबलद्वयमागतमेकैकं सनामांकं कृत्वा तयोर्दत्तं। एकदा मेघपिंगलस्य राज्ञी तं कंबलं प्रावृत्य प्रयोजनेन रूपवतीपार्श्वे गत्वा तत्र कंबलपरिवर्त्तो जातः। एकदा वृषभसेनाकंबलं प्रावृत्य मेघपिंगलः सेवायामुग्रसेनसभायां गतः। राजा च तमालोक्यातिकोपाद्रक्ताक्षो बभूव मेघपिंगलश्च तं तथाभूतमालोक्य ममोपरि कुपितोयं राजेति ज्ञात्वा दूरे नष्टः। वृषभसेना रुष्टेनोग्रसेनेन मारणार्थं समुद्रजले निक्षिप्ता तया च प्रतिज्ञा गृहीता यद्येतस्योपसर्गस्योद्धरामि तदा तपः करिष्यामीति। ततो व्रतमाहात्म्याज्जलदेवतया तस्याः सिंहासनादिप्रातिहार्यं कृतं। तच्छ्रुत्वा पश्चात्तापं कृत्वा राजा तामानेतुं गतः। आगच्छता च वनमध्ये गुणधरनामा

जल्पुद्यद्वादवर्पो जहिहिगमकतागर्वभूमा जहाहि-
व्याहारेर्ष्यो जहीहिस्फुटमृदुमधुरश्रव्यकाव्यावलेपः ॥
पाताले व्यालराजो वसति सुविदितं यस्य जिह्वासहस्रं
निर्गन्ता स्वर्गतोऽसौ न भवति धिषणो वज्रभृद्यस्य शिष्यः ।
जीवेतां तावदेतौ निलयबलवशाद्वादिनः केऽत्र नान्ये
गर्वं निर्मुच्य सर्वे जयिनमिनसभे वादिराजं नमन्ति ॥
वाग्देवीसुचिरप्रयोगसुदृढप्रेमाणमप्यादरा-
दादत्ते मम पार्श्वतोऽयमधुना श्रीवादिराजो मुनिः ।
भोः भोः पश्यत पश्यतेष यमिनां किं धर्म इत्युच्चकै-
रब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु वः ॥" इति,

ऐसमहाशयप्रकाशितमल्लिषेणप्रशस्तौ ।

इदमन्यदस्य कवेः प्रशंसापद्यमेकीभावस्तोत्रस्यावसाने दृश्यते—
'वादिराजमनु शाब्दिकलोको वादिराजमनु तार्किकसिंहः ।
वादिराजमनु काव्यकृतस्ते वादिराजमनु भव्यसहायः ॥' इति ।
दाक्षिणात्योऽयं कविरिति प्रतीयते । षट्तर्कषण्मुख-स्याद्वादविद्या-पति-जगदेकमल्लवादीत्याद्युपाह्वश्च ।

'श्रीमद्द्रमिलसंघेऽस्मिन्नन्दिसंघेऽस्त्यरुङ्गलः ।
अन्वयो भाति योऽशेषशास्त्रवाराशिपारगः ॥

* * * * *

सदसि यदकलङ्कः कीर्तने धर्मकीर्ति-
र्वचसि सुरपुरोधा न्यायवादेऽक्षपादः ।
इति समयगुरूणामेकतः संगतानां
प्रतिनिधिरिव देवो राजते वादिराजः ॥'

*(Vide Ins. No. 39, Nagar Taluq, by Mr. Rice.)*

'षट्तर्कषण्मुखरुं स्याद्वादविद्यापतिगळुं जगदेकमल्लवादिगळुं एनिसिद श्रीवादिराजदेवरुम्'

*(Vide No. 36 ibid.)*

अस्य समकालवर्ती पण्डितपारिजातापरनामा श्रीविजयभट्टारको यस्येदं प्रशंसापद्यद्वयं मल्लिषेणप्रशस्तौ—

'गङ्गावनीश्वरशिरोमणिबन्धसंध्यारागोल्लसच्चरणचारुनखेन्दुलक्ष्मीः ।
श्रीशब्दपूर्वविजयान्तविनूतनामा धीमानमानुषगुणोऽस्ततमःप्रमांशुः ॥

स्तुतो हि स भवानेष श्रीवादिराजदेवेन—

यद्विद्यातपसोः प्रशस्तमुभयं श्रीहेमसेने मुनौ
प्रागासीत्सुचिराभियोगबलतो नीतं परामुन्नतिम् ।
प्रायः श्रीविजये तदेतदखिलं तत्पीठिकायां स्थिते
संक्रान्तं कथमन्यथानतिचिराद्विद्येदृगीदृक्तपः ॥' इति ।

गद्यचिन्तामणि– क्षत्रचूडामणिकाव्ययोः प्रणेतुर्वादीभसिंह इति प्रथावतोऽजितसेनमुनेर्विद्यागुरुः पुष्पसेनमुनिर्वादिराजस्यास्यापरः सामानकालिकः । (*Vide No. 36 ibid.*)

यशोधरराजचरित्रप्रख्यापकाश्चत्वारः सन्ति काव्यप्रबन्धाः । तत्र पूर्णदेवप्रणीतो यशोधरचरिताभिधः पद्यकाव्यप्रबन्ध एकः । एकादशशतकस्य (A. D.) द्वितीयपादे वादिराजेन प्रणीतोऽयमपरः । ९५८ तमे क्रिस्ताब्दे सोमदेवेन संग्रथितो यशस्तिलकचम्पूर्नाम चम्पूप्रबन्धस्तृतीयः । अज्ञातकर्तृको यशोधरकाव्याभिधः पद्यात्मको द्रविडभाषाप्रबन्धश्चतुर्थः । अत्र चतुर्ष्वपि प्रबन्धेषु, वादिराजकृतयशोधरचरितस्य भाषाप्रबन्धयशोधरकाव्यस्य च तत्र तत्र परस्परं सुतरां समुल्लसति साधर्म्यम् । अतो वादिराजकृतयशोधरचरितमेव भाषाप्रबन्धस्य मूलमिति दिक् । चतुर्णां पुनरेतेषां काव्यप्रबन्धानां गुणभद्राचार्यप्रणीतोत्तरपुराणान्तर्गतसुव्रततीर्थकरकथायां विद्यमानं यशोधरचरितमेव मूलमिति निर्विवादम् ।

इति

टि. एस्. कुप्पुस्वामिशास्त्री.

॥ श्रीः ॥

श्रीवादिराजसूरिप्रणीतम्

# ॥ यशोधरचरितम् ॥

श्रीमदारब्धदेवेन्द्रमयूरानन्दनर्तनम् ।
सुव्रताम्भोधरं वन्दे गम्भीरनयगर्जितम् ॥ १ ॥

अस्माकं जिनसिद्धश्रीसूर्युपाध्यायसाधवः ।
कुर्वन्तु गुरवः सर्वे निर्वाणपरमश्रियम् ॥ २ ॥

श्रीमत्समन्तभद्राद्याः काव्यमाणिक्यरोहणाः ।
सन्तु नः संततोत्कृष्टाः सूक्तिरत्नोत्करप्रदाः ॥ ३ ॥

इतिहाससमासोऽयमत्रावहितचेतसाम् ।
आस्रवन्ति शुभान्युच्चैर्निर्जीर्यन्त्यशुभान्यपि ॥ ४ ॥

वर्धयत्येष संवेगं विधत्ते शुद्धदृष्टिताम् ।
प्रध्वस्तीकुरुते व्याधीनाधीनपहरत्यलम् ॥ ५ ॥

श्रीपार्श्वनाथकाकुत्स्थचरितं येन कीर्तितम् ।
तेन श्रीवादिराजेन दृब्धा याशोधरी कथा ॥ ६ ॥

इहास्ति भारते वास्ये देशे यौधेयनामनि ।
पुरं राजपुरं नाम्ना राजराजपुरोपमम् ॥ ७ ॥

कार्तस्वरमयो यस्य परिधिश्चुम्बिताम्बुदः ।
भाति मध्यंदिनार्कस्य परिवेष इवान्वहम् ॥ ८ ॥

प्रासादशिखरप्रोतपद्मरागमरीचिभिः ।
मध्याह्नार्कातपो यत्र मिश्रो बालातपायते ॥ ९ ॥

यन्नित्यं धनदावासकेतुभिर्वातकम्पितैः ।
दूरादाह्वयतीवोच्चैरर्थिनः सर्वदिङ्मुखैः ॥ १० ॥

यस्मिन्नसमलावण्यनिर्मितावयवा अपि ।
सर्वाङ्गमधुरायन्ते भोगिनां मृगलोचनाः ॥ ११ ॥

यत्र प्रत्युरसं नारीपयोधरपरिस्पृशः ।
कामदावाग्निसंतापान्मुच्यन्ते युवभूभृतः ॥ १२ ॥

यत्र च स्पृहयालुभ्यो दायं दायं व्ययीकृताः ।
अपि प्रत्यहमेधन्ते सतां विद्या इव श्रियः ॥ १३ ॥

अवाच्यां दिशि तस्यास्ति चण्डमारीति देवता ।
एकान्ततः प्रिया यस्याः प्राणिनामुपसंहृतिः ॥ १४ ॥

या च सत्त्वोपघातेन यथाकालमनर्चिता ।
राज्यराष्ट्रोपघाताय रौद्रमूर्तिः प्रकल्पते ॥ १५ ॥

आराधिता तु तत्पौरैरुचितोपक्रमेण या ।
दुर्भिक्षमारकव्याधिप्रध्वंसेन प्रसिध्यति ॥ १६ ॥

इषे चैत्रे च मासस्याः पुरः पौरैर्नृपान्वितैः ।
यात्रा निर्वर्त्यते चित्तप्रसादाद्वरलिप्सुभिः ॥ १७ ॥

न्यवेदयदिवागत्य मधुस्तस्यै निजागमम् ।
माकन्दकलिकास्वादमत्तकोकिलनिस्वनैः ॥ १८ ॥

उद्गिरन्दिशि दिश्युच्चै रक्ताशोकस्य मञ्जरीः ।
जहारेव बलिं तस्यै स कालः स्वस्य शोणितैः ॥१९

देवतावासचूतानां शाखासु परपुष्टकैः ।
शुल्यमांसैरिवातस्थे मधुनोपायनीकृतैः ॥ २० ॥

ततस्तदर्चनाकालं विलम्बयितुमक्षमः ।
देवतावासमायासीन्मारिदत्तो नराधिपः ॥ २१ ॥

पौराः पुरपतेस्तस्य नियोगादविलम्बितम् ।
आनिन्युरखिलाशाभ्यो युग्मं युग्मं तनूभृताम् ॥ २२

कुक्कुटच्छागसारङ्गवराहमहिषादयः ।
चुक्रुशुर्देवतावासे दीर्घबन्धनपीडिताः ॥ २३ ॥

तद्ध्वनिस्फारसंबाधान्निर्भिन्ना तत्र तत्र भूः ।
विवृताधोगतिद्वारबहुरन्ध्रेव निर्बभौ ॥ २४ ॥

प्रभुरुत्खातखड्गस्तु चण्डकर्माणमादिशत् ।
मृग्यतां मर्त्ययुगलं शुभलक्षणसंभृतम् ॥ २५ ॥

तस्मिन्मया स्वहस्तेन देव्यै व्यापादिते सति ।
पौरास्तांस्तान्विनिघ्नन्तु जीवांस्तिर्यक्प्रसारिणः ॥२६॥

अन्यथा विधिविध्वंसो देव्यै कोपमुपानयन् ।
बालस्त्रीपशुवृद्धानां विप्लवाय विजृम्भते ॥ २७ ॥

इति स्वामिनियोगेन चण्डकर्मा कृतत्वरः ।
प्रस्थाप्येतस्ततो भृत्यान्स्वयं चान्वेष्टुमव्रजत् ॥ २८ ॥

अस्मिन्नवसरे धीमान्पञ्चशत्या सुसंयतैः ।
आगतस्तत्पुरोद्यानं सुदत्तो मुनिपुंगवः ॥ २९ ॥

स त्रिदोषविनिर्मुक्तः सत्रिदण्डविवर्जितः ।
स त्रिशल्यापविध्वंसी स त्रिगारविदूरगः ॥ ३० ॥

स सप्तभयनिर्मुक्तः सत्त्वानामभयप्रदः ।
स स्वाध्यायपरो नित्यं स शुद्धज्ञानदीधितिः ॥ ३१ ॥

स एकस्तपसां धाम स व्रतानां महोदधिः ।
स भव्याम्बुजतिग्मांशुः स शीलाचारनिर्मलः ॥ ३२ ॥

स शंसितव्रतैः सार्धमासीनः पावने क्वचित् ।
मार्गातिचारनियमं तत्परो निरवर्तयत् ॥ ३३ ॥

ततः कृतोपवासायां तद्दिने मुनिसंहतौ ।
अनुजग्राह भिक्षार्थे स मुनिः क्षुल्लकद्वयम् ॥ ३४ ॥

प्रणिपत्य मुनिं गच्छत्तच्च तच्चण्डकर्मणा ।
जगृहे प्रथमं पश्चान्निन्ये राजपुरेश्वरम् ॥ ३५ ॥

तदाभयरुचिर्वाचमनुजामित्यवोचत ।
मानश्चेतः समाधेहि मा स्म मृत्योर्भयं कृथाः ॥ ३६ ॥

किं न वेत्सि चिराभ्याससुसहं दुःखमावयोः ।
कथं वा दुःखनिर्मुक्तिः काये तत्कारणे नृणाम् ॥३७॥

तस्मादवश्यभोक्तव्ये किमुद्वेगः करिष्यते ।
किं च तीव्रं तपः प्राहुः परीषहजयं बुधाः ॥ ३८ ॥

अग्रजस्य निशम्योक्तिमुवाचाभयमत्यपि ।
आवयोरस्ति किं भीतिर्ज्ञातपूर्वापरान्तयोः ॥ ३९ ॥

इदमेव हि विद्वत्त्वमिदमेव हि तत्फलम् ।
यन्मनो विदुषामुच्चैर्माध्यस्थ्यं सुखदुःखयोः ॥ ४० ॥

आश्वासयन्तावन्योन्यमिति तौ राजपुत्रकौ ।
आसेदतुरनाशङ्कौ चण्डमारीनिकेतनम् ॥ ४१ ॥

रक्तसंमार्जिता रक्ता नित्यं यस्याजिरक्षितिः ।
प्रसारितेव जिह्वोच्चैर्देव्या रक्तासवेच्छया ॥ ४२ ॥

मांसस्तूपाः स्वयं यत्र मक्षिकापटलावृताः ।
छर्दिताश्चण्डमार्येव बहुभक्षणदुर्जराः ॥ ४३ ॥

नवैर्नरशिरोभिर्यत्प्राकारशिखरोद्धृतैः ।
अन्वेष्टीवाशु जीवानां देवता बहुभिर्मुखैः ॥ ४४ ॥

राज्ञि संनिहिते तस्मिन्नाशिषं प्रेरितौ जनैः ।
तावाशीर्वादमीदृक्षमध्यैषातां मनीषिणौ ॥ ४५ ॥

सर्वसत्त्वहितो यस्तु सर्वलोकसुखप्रदः ।
विदध्यास्तेन धर्मेण राजन्राजन्वतीं क्षितिम् ॥ ४६ ॥

मारिदत्तस्तु तौ दृष्ट्वा निर्भयस्पष्टभाषिणौ ।
प्रशान्तश्चिन्तयामास विस्मयस्मेरलोचनः ॥ ४७ ॥

देवद्वन्द्वमिदं किं नु मानवाकारवञ्चितम् ।
उत स्विन्नागमिथुनं निर्जितस्मरतत्प्रियम् ॥ ४८ ॥

न कदाचिन्मया दृष्टमभिरूपकमीदृशम् ।
अहो चिराय मे जाता नेत्रदृष्टिः फलावहा ॥ ४९ ॥

अपि चोत्खातखड्गं मां दृष्ट्वा देवीं च निष्कृपाम् ।
न चित्तमनयोस्त्रस्तमहो शौर्यमनुत्तरम् ॥ ५० ॥

इत्यपृच्छदभिव्यक्तं कौ युवां कुत आगतौ ।
किंकुलौ किंनिमित्तं वा बाल्ये भोगास्पृहावुभौ ॥ ५१ ॥

ततोऽभयरुचिर्धीमांस्तस्योत्तरमुदाहरत् ।
वाङ्मयूखैर्निराकुर्वन्दुरन्तं दुरितं तमः ॥ ९२ ॥

आवयोश्चरितं राजन्धार्मिकेभ्योऽभिरोचते ।
अधर्मरसिकश्चासि त्वं तत्किमभिलप्यते ॥ ९३ ॥

प्रकृतिर्विपरीता न क्षमते गुणदर्शनम् ।
पित्तज्वरवतः क्षीरं मधुरं नावभासते ॥ ९४ ॥

तदलं कथयास्माकं कुरु पथ्यं यदात्मनः ।
यच्च कर्मानुरूपं नस्तदस्तु प्रगुणा वयम् ॥ ९५ ॥

इत्युक्तस्तेन निस्त्रिंशं निरस्य रचिताञ्जलिः ।
निर्बन्धन्नृपो भूयः कुमारोऽप्यब्रवीदिदम् ॥ ९६ ॥

तदास्थानसरः सर्वं करवारिजकुट्मलैः ।
पूजयामास बालेन्दुं धर्मामृतरसच्युतम् ॥ ९७ ॥

भो भो नराधीश्वर साधु साधु
त्वया मतिर्धर्मपथे निबद्धा ।
कालेन भव्यत्वगुणो हि दीप्तः
कल्याणबुद्धिं कुरुते नराणाम् ॥ ९८ ॥

धर्मामृतस्यन्दिनि सूक्तिसारे
ततोऽवधानं कुरु मामकीने ।

श्रद्धानबुद्धया हि निशम्यमानो
निःशेषयत्येतदशेषदुःखम् ॥ ५९ ॥

इदं न साक्षात्कृतविश्वतत्त्वै-
र्जिनेश्वरैः केवलमभ्यधायि ।
तदा तदा दुःखसहस्रदग्धै-
रस्माभिरप्यन्वहमन्वभावि ॥ ६० ॥

तत इदं चरितामृतमावयोः
सकलदोषपरिक्षयकारणम् ।
नव नरेन्द्र वदामि सविस्तरं
समवधेहि सतां प्रतिभाषितम् ॥ ६१ ॥

एतत्सारमुदारसौख्यसुभगस्थानोपपत्तिप्रदं
कल्याणं तदिहावबद्धमतयः संशृण्वते ये बुधाः ।
तेऽमी कुन्दशशाङ्कनिर्मलयशःश्रीदिग्धदिग्भित्तयः
श्रेयः शाश्वतमाप्नुवन्ति भुवने भुक्तोरुभोगश्रियः ॥

इति वादिराजसूरिविरचिते यशोधरचरिते प्रथमः सर्गः ॥

## ॥ द्वितीयः सर्गः ॥

अस्त्यूर्जितावन्तिषु कान्तभोगैः
पुरी जगत्युज्जयिनी प्रसिद्धा ।
माहोदयामाह्वयते समृद्ध्या
या राजधानीं शतयज्वनोऽपि ॥ १ ॥

अनेकयुद्धेष्ववलिप्तवैरि-
विध्वंसनाविष्कृतविक्रमश्रीः ।
बभूव तस्यां नयविन्नरेन्द्रो
यशोघ इत्यूर्जितनामधेयः ॥ २ ॥

स घंसते यत्कुमुदावदातं
यशो दिशां भित्तिषु बद्धलेपम् ।
ततस्तमाहुः कवयो यशोघं
पृषोदराद्युक्तनिरुक्त्यभिज्ञाः ॥ ३ ॥

तस्यार्पिता प्रत्युरसं रहस्ये
चर्चेव नित्यं हरिचन्दनस्य ।
प्रवृद्धरागा स्मरतापमुच्चै-
श्चन्द्रानना चन्द्रमती जहार ॥ ४ ॥

तयोरतुल्यो नयविक्रमाभ्या-
मासीत्सुपुत्रः स यशोधराख्यः ।

अभ्युद्धरन्दिक्षु यशः प्रकाशं
क्षीरोदकल्लोलकलापशुभ्रम् ॥ ५ ॥

विमुच्य कान्तिः शरदिन्दुबिम्बं
भूयः क्षयापत्तिभयातुरेव ।
तस्याक्षयश्रीनिलयस्य वक्त्रं
व्याकोचनीलोत्पलमध्युवास ॥ ६ ॥

उरस्तु विस्तीर्णमुदारधाम्न-
स्तस्योल्लसन्मौक्तिकहारयष्ट्या ।
श्रियस्तदन्तर्वसतेर्विरेजे
संभोगहासप्रभयेव बद्धम् ॥ ७ ॥

घनौ भुजौ तस्य भुजंगदीर्घौ
देहाविव द्वौ रणविक्रमस्य ।
अरातिराजोर्जितमण्डलाना-
मकल्पिषातामिव राहुकेतू ॥ ८ ॥

निस्त्रिंशनिर्धारितवैरिकुम्भी
समग्रसिंहः स पराक्रमेण ।
तन्वा तु सौन्दर्यनिवासभूम्या
जगाम कीर्तिं भुवि सिंहमध्यः ॥ ९ ॥

तस्योत्तमाशेषगुणस्य कश्चि-
न्न मध्यमो नापि गुणो जघन्यः ।

तस्मिन्न भेजुस्तत एव तृप्तिं
ताभ्यां सकामा हि नितम्बवत्यः ॥ १० ॥

पादौ तदीयौ नवपद्मरागौ
क्रियाविधानादुपलब्धशोभौ ।
किमद्भुतं यत्पृथिवीपतीनां
चूडामणित्वं गुणतोऽजिहाताम् ॥ ११ ॥

देवी तु तस्यामृतमत्यभिख्या
सेन्दो रसांशैरिव निर्मिताङ्गी ।
नामेव कुर्वन्नलिकामजस्रं
तन्मानसास्वादमबोधि कामः ॥ १२ ॥

यशोमतिं नाम यशोघपौत्रं
यशोमृताप्यायितविश्वलोकम् ।
तया स पुत्रं जनयांबभूव
पूतक्रताय्येव जयन्तमिन्द्रः ॥ १३ ॥

तत्रात्मसंपद्गुणवत्युदारे
यूनि प्रयुज्याखिलराज्यभारम् ।
निराकुलस्वान्तनिसृष्टरागः
श्रियं यशोघश्चिरमन्वभुङ्क्त ॥ १४ ॥

अथैकदास्थानगतस्तु राजा
निषेव्यमाणो नरलोकनाथैः ।

आदर्शदृष्टच्या पलितानि दृष्ट्वा
जघान तृष्णां विषयेषु भव्यः ॥ १५ ॥

राज्यं पृथिव्याः प्रतिपाद्य सद्यो
यशोधरायोर्जितविक्रमाय ।
विरक्तिभाजां नु शतेन राज्ञां
तपोवनं भूमिपतिर्जगाम ॥ १६ ॥

तस्मिन्नेव भर्तरि सानुरागा
सा स्त्रीस्वभावादिव राज्यलक्ष्मीः ।
अनारतं तत्कृतयेव भक्त्या
सुव्यक्तमङ्गेषु बभूव पुष्टा ॥ १७ ॥

गुणामृतैस्तस्य निषिच्यमाना
पत्युर्वियोगेन विमुच्य तापम् ।
ससञ्ज तस्मिन्प्रकृतिः समस्ता
सौरीव नीहारकरे मरीचिः ॥ १८ ॥

क्रोधावहं तच्चरितं न पुंसा-
मुद्धजनोऽसौ न विविच्यकारी ।
न चावमन्ता विनयोत्तरश्री-
र्दाता स लोभं न सहिष्णुरासीत् ॥ १९ ॥

तेजोमयं तस्य नृपस्य चक्षु-
र्निमील्य तन्मुख्यमवाप्य निद्राम् ।

अन्येन सर्वाङ्गभुवा तु जाग्र-
 त्स तस्कराणामहरत्प्रवृत्तिम् ॥ २० ॥

मन्त्रक्रियाभ्यामसियष्टिर्वेद्यां
 स्वतेजसाभिज्वलितेन राजा ।
निरास्थदुद्यद्रिपुकेतुदौःस्थ्यं
 समग्रसिद्ध्यै निजमण्डलस्य ॥ २१ ॥

दिनावसाने स विसृज्य लोकं
 प्रासादमारुह्य सरत्नभित्तिम् ।
कदाचिदासिष्ट मनोजतृप्त्यै
 स प्रेयसीगर्भगृहे सहेलम् ॥ २२ ॥

वहन्बहिश्चारुगवाक्षरन्ध्रै-
 रामोदितान्तर्भवनस्तदानीम् ।
कपोतपक्षच्छविरुज्जजृम्भे
 निर्हारिकालागुरुपिण्डधूमः ॥ २३ ॥

आताम्रकम्रद्युतिरत्नदीपै-
 स्तस्मिञ्जनाः पाटलवर्णभाजाम् ।
व्याकोशमल्लीकुसुमानि धाम्ना-
 मवागमंस्तन्नवसौरभेण ॥ २४ ॥

आवर्तमानः परिमन्दवृत्त्या
 वातायनद्वारि चिरं विरेजे ।

कर्पूरधूलीसुरभिर्नभस्वा-
न्श्वासायितस्तद्गृहदेवतायाः ॥ २५ ॥

आमेचके मञ्चकरत्नदीप्त्या
शुक्लोत्तरप्रच्छदहंसतूले ।
स चन्दनस्थासकबन्धुराङ्गो
देवीमुदारां रमयांबभूव ॥ २६ ॥

क्षणं स तस्या वदनारविन्दे
जग्राह लीलां भ्रमरस्य कामी ।
क्षणं तु पीनस्तनयोर्निकामं
जहार चर्चां हरिचन्दनस्य ॥ २७ ॥

क्षणं तया नूतनरत्नभाजा
भुजेन कण्ठे परिरभ्यमाणः ।
कृताभ्रमुस्पर्श इवेन्द्रदन्ती
भेजे स भावं भृशमुन्मदिष्णुः ॥ २८ ॥

क्षणं जिघृक्षुर्जघने निधानं
नीवीधरान्तर्गतमुत्फलाक्ष्याः ।
उत्सारयामास कृतापजाप-
स्तद्वेष्टयन्तं रशनाभुजंगम् ॥ २९ ॥

आलिङ्गनं गाढमपास्य तस्मि-
न्दत्तेक्षणे कामिनि नाभिमूले ।

फूत्कारदुर्वारमणिप्रदीपे-
ष्वतीव सुभ्रूरकृताभ्यसूयाम् ॥ ३० ॥

निपीड्य दन्तच्छदमुद्दशान्तं
सा वेदनासीत्कृतगर्भकण्ठी ।
कचावकृष्टेन तु मल्लिकानां
दाम्ना दृशा कोपकरी जघान ॥ ३१ ॥

रतिक्रियायां विपरीतवृत्ते-
स्तस्याः स्तनाभ्यामवमुच्यमानम् ।
प्रियस्य तस्योरसि घर्मतोयं
कामानलाज्याहुतिवत्पपात ॥ ३२ ॥

ततो रजन्यां परिणामवत्यां
रतोत्सवारम्भपरिश्रमेण ।
आश्लिष्य कान्तां श्लथभावबन्धं
निद्रासुखं भूमिपतिः प्रपेदे ॥ ३३ ॥

अत्रान्तरे दन्तिनि राजवाह्ये
नद्वासगेहं समयावबद्धे ।
तत्र स्थितो हस्तिपकस्तु जाग्र-
द्बबन्ध गीतं गमकाभिरम्यम् ॥ ३४ ॥

तन्मूर्च्छनाभिः स्फुटमभ्युदीर्णं
तत्प्रौढमाभोगवता स्वरेण ।

तत्सुप्रयोगान्मधुरावदातं
तद्बन्धुरं मालवपञ्चमेन ॥ ३५ ॥

निमीलयन्ती नयनोत्पले सा
देवी परिम्लानतनू रतान्ते ।
आकर्णयामास सुखावहं त-
च्चकार तृष्णामपि रक्तकण्ठे ॥ ३६ ॥

ततः प्रभाते तदभीकचित्ता
दूतीमुपस्थापयति स्म तस्मिन् ।
सा तं निरीक्ष्यैव निवर्तमाना
निनिन्द राज्ञीं गुणवत्यभिख्या ॥ ३७ ॥

अहो विचित्रं मकरध्वजस्य
विडम्बनं स्तम्भितवस्तुबुद्धेः ।
देवी तु मर्त्याकृतिरुर्वशी सा
यदीदृशं कामयते निकृष्टम् ॥ ३८ ॥

आस्यादिकं दुःसहपूतिगन्धि
निसर्गतोऽङ्गं परिभुग्नपृष्ठम् ।
संदिग्धमक्षिभ्रुवमस्य नास्ति
ग्रीवा शिरस्यास्तु विलूनशीर्णाः ॥ ३९ ॥

आस्यं पुनर्वायसतुण्डकृष्णं
दन्ताश्च केचिद्बहिरन्तरन्ये ।

करावजस्त्रं करिमूत्रदिग्धौ
दग्धव्रणक्लेदयुतस्तु कुक्षिः ॥ ४० ॥

असौ कथं नाम नरेन्द्रपत्न्यै
रोचेत रुच्याकृतिमुद्वहन्त्यै ।
यद्वा किमेवं परिचिन्तया मे
स्त्रीणामपात्रे हि रतिः स्वभावः ॥ ४१ ॥

एतत्स्वचेनोगतमेव दूती
न्यवेदयत्तामुपसृत्य तन्वीम् ।
सा तां प्रति प्रत्यवदन्नतभ्रू-
र्मुखेन कामातुरगद्गदेन ॥ ४२ ॥

वयो नवं रूपमतीव रम्यं
कुलोन्नतिश्चेति कुबुद्धिरेषा ।
यत्र प्रसन्नो भगवान्मनोभूः
स एव देवः सखि सुन्दरीणाम् ॥ ४३ ॥

मतोऽपि रूपातिशयस्य साध्यं
नितम्बिनीमानसरत्नलाभः ।
नस्यास्ति चेत्तत्किमतो विचारा-
त्कार्ये तु सिद्धे न हि कारणेच्छा ॥ ४४ ॥

तस्मादसौ मां प्रति कामदेव-
स्तद्गीतनालीहृतचित्तवृत्तिम् ।

किं वा वयस्ये बहुनोदितेन
न तेन जीवामि विनाकृताहम् ॥ ४५ ॥

इत्थं तया दर्शितरागवृत्त्या
देव्या सनिर्बन्धमुदीर्यमाणा ।
आगत्य सा सत्वरमष्टभङ्गं
दूती ततस्तत्प्रियमन्वतिष्ठत् ॥ ४६ ॥

रात्रिंदिवं तेन यथावकाशं
सुखानि तस्याः किल निर्विशत्याः ।
दिनक्रमेणापचयं जगाहे
यशोधरे राजनि रागबुद्धिः ॥४७ ॥

आलोकनालिङ्गनचुम्बनादौ
तस्याः स्थितिं तामनवेक्षमाणः ।
बुद्ध्यैव पूर्वं परिशोधनार्थं
सज्जोऽभवच्चन्द्रमतीतनूजः ॥ ४८ ॥

आस्थाननिर्वासितराजलोकः
स सज्जितं वासगृहं प्रविश्य ।
सव्याजनिद्रो निशि दिव्यशय्यां
तयैव देव्या सममध्यशेत ॥ ४९ ॥

निद्रायतस्तस्य भुजोपगूढा-
माकृष्य देवी निजदेहयष्टिम् ।

गृहीतताम्बूलसुगन्धमाल्या
जगाम तस्योपपतेः समीपम् ॥ ९० ॥

अन्वेष्टुकामो नृपतिश्च तस्या
दुश्चेष्टितं कोशानिसृष्टखड्गः ।
अन्वव्रजत्तत्पदवीं निगूढ-
मासन्नविध्वंस इवापनीतिम् ॥ ९१ ॥

विलम्ब्य कालं नरनाथपत्नी-
मुपस्थितां प्रत्युदितप्रकोपः ।
आकृष्य केशग्रहणेन घोरं
जघान जारः स वरत्रमुष्ट्या ॥ ९२ ॥

निकृष्यमाणा भुवि तेन पद्भ्यां
मलीमसेनाकृतविप्रलापा ।
इनस्ततोऽगात्तमसेव काले
निपीड्यमाना दिवि चन्द्रकान्तिः ॥ ९३ ॥

कण्ठे पदं न्यस्य च गाढमूर्च्छां
स तामवादीदिति सोपहासम् ।
पादौ वहेऽहं तव तन्वि मूर्ध्ना
मूका कुतस्तिष्ठसि मुञ्च शोकम् ॥ ९४ ॥

निःश्वस्य सा तं कथमप्यवादी-
दागो न मे संहर कान्त कोपम् ।

राज्ञा सहार्धासनमेव दीर्घं
हेतुस्तु मे कालविलम्बनस्य ॥ ५५ ॥

रूपादिभिस्त्वय्यवसायिभिर्मे
तृप्यन्ति सर्वाण्यपि चेन्द्रियाणि ।
त्वं जीवितव्यं मम यावदायु-
रनादरस्त्वय्यथ किं मम स्यात् ॥ ५६ ॥

प्रत्यायितेनेत्युपभुज्यमानां
राजा स तां तेन विलोक्य कोपात् ।
आन्दोलयन्खड्गमुभौ जिघांसुः
पुनर्वितर्कं धृतिमानकार्षीत् ॥ ५७ ॥

क्षुद्रः कियानेष गजोपजीवी
न जातु नारी विकृतापि वध्या ।
सत्क्षत्रमेतन्मम तन्न किं तु
यशः परं भ्रश्यति हारशुभ्रम् ॥ ५८ ॥

अयं च युद्धे रिपुवीरघाती
खड्गः कथं क्षुद्रजने निपात्यः ।
दंष्ट्राङ्कुरं निर्दलितेभकुम्भं
न फेरवे जातु हरिः प्रयुङ्क्ते ॥ ५९ ॥

इति स्वचेतस्यवधार्य शान्त्या
निवृत्य शय्यापुलिने शयानम् ।

तं राजहंसं पुनरन्वशेत
    व्यावृत्य सा देव्यपि गुप्तवृत्त्या ॥ ६० ॥

यत्तस्य गाढं परिरम्भणेच्छां
    बबन्ध पूर्वं कृतरागबुद्धेः ।
तदेव तस्याः स्तनयोस्तदानीं
    कार्कश्यमुद्वेजनमाजहार ॥ ६१ ॥

उदस्य तस्याः सुरतोपचारं
    निद्रामिवाधिक्यवतीं दधानः ।
तत्साहसोद्वेगवता निकामं
    स भूमिनाथो मनसेत्यवोचत् ॥ ६२ ॥

इयं हि सर्वावयवाभिरामा
    वश्यापि कामं मकरध्वजस्य ।
कथं निकृष्टेऽपि रमेत यद्वा
    मोहं विधत्ते विषयाभिलाषः ॥ ६३ ॥

रूपे मनोहारिणि यौवने च
    वृथैव पुंसामभिमानबुद्धिः ।
नतभ्रुवां चेतसि चित्तजन्मा
    प्रभुर्यदेवेच्छति तत्करोति ॥ ६४ ॥

इयं द्वितीया मम राज्यलक्ष्म्या
    यद्वमुष्यैर्व्यभिचारभूमिः ।

कथं च तस्यां चपलप्रकृत्यां
　　विश्वासमत्यन्तमुपव्रजामि ॥ ६५ ॥

तत्कामवश्यं धिगिदं मनो मे
　　धिग्धिग्विभूतीरसुखप्रचाराः ।
प्रव्रज्यया तां पुनरव्यपाया-
　　मन्वेषयिष्यामि हि सिद्धिकान्ताम् ॥ ६६ ॥

इत्थं परामृश्य परैर्विकल्पै-
　　र्निमील्य नेत्रे नृपतिः शयानः ।
आकर्णितैर्बुद्ध इवोत्थितोऽभू-
　　त्प्राभातिकैर्मङ्गलगीतनादैः ॥ ६७ ॥

कृत्वा घृतावेक्षणमुच्चकैर्गां
　　स्पृष्ट्वा भिषग्भिः प्रविचिन्त्य कायम् ।
स नर्मबन्धुः प्रघणोपविष्टां
　　देवीं सखीमध्यगतामपश्यत् ॥ ६८ ॥

प्रहासगोष्ठीं विरचय्य बुद्ध्या
　　संक्रीडमानः स तया नरेन्द्रः ।
जघान तस्याः सुकुमारमङ्गं
　　लीलागृहीतेन नवोत्पलेन ॥ ६९ ॥

तद्वेदनां सोढुमिवाक्षमत्वा-
　　न्निपातयन्तीं तनुमुर्वरायाम् ।

आश्वासयंश्चन्दनवारिसेकै-
रवोचदेवं कृपयेव भूपः ॥ ७० ॥

अनेन रन्ध्रेषु रसच्युता ते
कृष्णाननेनाद्य निपीडितायाः ।
दैवेन केनापि वरं विदग्धे
निवारितः संनिहितोऽपि मृत्युः ॥ ७१ ॥

इत्येवमासूचितरात्रिवृत्ता-
मादाय वाचं प्रतिबोध्य राज्ञीम् ।
उद्वेगभूम्ना जननीसमीपं
जगाम राजा क्वचिदव्यवस्थः ॥ ७२ ॥

विनयविनमन्मूर्धानं सा निरीक्ष्य निजात्मजं
विवृतनयनद्वन्द्वेनापातुमिच्छुमिवादरात् ।
निकटविधृतं मूर्धन्यादाय चन्द्रमती तदा
प्रमदमधिकं भेजे भूरिस्नुतोरुपयोधरा ॥ ७३ ॥

कुलधरवनिताभिः सा सती रत्नपात्रा-
त्तनयशिरसि कृत्वा नव्यदूर्वाक्षतौघान् ।
इदमशिषदशेषामुर्वरां रक्ष दीर्घं
करधृतकरवालोन्मूलितारातिवर्गः ॥ ७४ ॥

म्लायद्वदनाम्बुजे निजवधूदुर्वृत्तचिन्ताभरा-
न्निःश्वस्यायतमुष्णमुष्णमवनीचक्रेश्वरे तस्थुषि ।

इत्थं चन्द्रमती तदेकतनयं मोहादवोचद्वचो
दृप्तारातिविमर्दलब्धविजयश्रीदत्तकीर्तिध्वजम् ॥७५॥

इति श्रीमद्वादिराजसूरिविरचिते यशोधरचरिते महाकाव्ये
द्वितीयः सर्गः ।

---

## ॥ तृतीयः सर्गः ॥

अद्वितीयभुजविक्रम तुभ्यं
शत्रवस्तनय न प्रभवन्ति ।
निःसपत्नमपि राज्यमिदं ते
क्षारवारिपरिधौ वसुधायाम् ॥ १ ॥

अर्थिलोकजलदैरनुवेलं
गृह्यते यदपि संस्तुतिगर्जैः ।
अक्षयस्तदपि तावतिथस्ते
वस्तुकोशनिवहार्णव एषः ॥ २ ॥

पीवरस्तनभरोद्धृतहाराः
स्मेरचारुवदनाश्च तरुण्यः ।
सन्ति कन्तुरसिकस्य रिरंसाः
स्निग्धदीर्घपरिमुग्धदृशस्ते ॥ ३ ॥

हृद्यवाद्यमृदुमेदुरनादै-
    र्गायका जनमनोहरगीतैः ।
नर्तकीसरसनर्तनकेली-
    लीलया वससि चान्यविनोदैः ॥ ४ ॥

प्रौढसाधुवचनैर्गमकैः षट्-
    तर्कषण्मुखबुधैर्दृढवादैः ।
त्वं विनोदसुखमृच्छसि गोष्ठ्यां
    वस्तुवर्णकविताचतुरश्रैः ॥ ५ ॥

ग्रन्थसंगतनिबन्धनदक्षा
    रूढकर्मविधयो दृढभक्त्या ।
चिन्तयन्ति भिषजस्तव कार्यं
    दुष्टवैद्यगजकेसरिणस्ते ॥ ६ ॥

सावलेपकविवेचनशक्तैः
    सूक्तिसारसरलामृतवाग्भिः ।
त्वं विनोदसुखमृच्छसि गोष्ठ्यां
    वस्तुवर्णकविताचतुरश्रैः ॥ ७ ॥

सर्वलोकविदिताखिलवादै-
    स्तर्कशास्त्रकलया गुहरूपैः ।
प्रौढसारवचनामृतसारै-
    र्वादिभिस्त्वमनिशं सुखमेषि ॥ ८ ॥

तत्किमङ्ग वदनाम्बुरुहे ते
म्लानभावमवलोक्य दिनादौ ।
मुक्तहर्षमधुना तव वत्स
क्षारदग्धमिव सीदति चेतः ॥ ९ ॥

इत्युवाच जननीमथ राजा
देवराजसदृशो विभवेन ।
आशिषा चिरमृतंमरया ते
सर्वमेव मम देवि सुभद्रम् ॥ १० ॥

किं तु कान्तिरवमुच्य मृगाङ्कं
बिभ्रतं कुवलयोर्जितलक्ष्मीम् ।
व्यक्तमद्य तु मया निशि दृष्टा
देवि संगमकरी तिमिरेण ॥ ११ ॥

तादृशं तु सकृदप्युपलब्धं
जन्मनीह न मया स्वपताऽपि ।
तत्पुनर्मनसि कीलितमुच्चै-
र्दुःसहं वितनुते मम दुःखम् ॥ १२ ॥

तस्य तत्तु वचनं निजनारी-
दुश्चरित्रपिशुनं क्षितिभर्तुः ।
स्वप्नमेव परिभाव्य विमूढा
संभ्रमादिदमवोचत माता ॥ १३ ॥

अत्र वत्स वितनु प्रतिकारं
स्वप्नदर्शनमिदं खलु दुष्टम् ।
चण्डिका सपदि पूजयितव्या
सा हि विघ्नशमनी परितुष्टा ॥ १४ ॥

आविकं तनय घातय सद्य-
स्तद्गृहे तव भुजासिमुखेन ।
सा तु तेन बलिना परितृप्ता
स्वप्नदोषमचिरेण निहन्ति ॥ १५ ॥

इत्यवोचत नृपस्तु पिधाय
श्रोत्ररन्ध्रयुगलं स कृपालुः ।
देवि किं पुनरिदं तव युक्तं
वक्तुमित्थमविचारमधर्म्यम् ॥ १६ ॥

मानवस्य खलु जीवितमद्य-
श्वीनमस्य तु कृते तनुघाते ।
दुःखमात्मनि सुदुर्धरमौर्ध्व-
देहिकं कथमिवोपनयेयम् ॥ १७ ॥

प्रत्ययस्तु सुदृढो जिनधर्मे
मत्कुलक्रमभुवां हि नृपाणाम् ।
तत्र हिंसनमतीव हि निन्द्यं
नारकादिभवदुःखनिमित्तम् ॥ १८ ॥

पुत्रवत्सलतया पुनरेवं
देवि मा स्म वचनं मयि वादीः ।
इत्यनेन वचनेन सकोपा
चन्द्रमत्यथ पुनस्तमवादीत् ॥ १९ ॥

अस्तु मद्वचनलङ्घनमेत-
दस्तु ते मतमहिंसनमर्घ्यम् ।
अन्यथा तनय तर्पय देवीं
शालिपिष्टमयकुक्कुटहत्या ॥ २० ॥

इत्यनुक्षणमुदीरितवाचो
मातुराग्रहमवेत्य स दध्यौ ।
अन्यदुक्तमिदमन्यदिदानी-
मागतं तदिह किं करवाणि ॥ २१ ॥

मातुरुक्तमवमन्तुमयुक्तं
कुत्सितस्तनुभृतामपि घातः ।
हन्त केन विधिना मम चित्तं
संकटे निपतितं पुनरस्मिन् ॥ २२ ॥

चेतनप्रतिकृतावपि हिंसा
कल्पिता भवति चेतन एव ।
आस्रवो यदभिसंधिविशेषैः
कर्मणामभिहितो मुनिमुख्यैः ॥ २३ ॥

इत्यनुस्मृतविवेकरसोऽपि
प्रेरितः सपदि मातरि भक्त्या ।
अम्बया सह महीपतिरुच्चै-
श्चण्डिकागृहमयानयहीनः ॥ २४ ॥

अष्टमीदिवसमङ्गलवारे
शुद्धभाजि सुतरामिषमासे ।
त्रिः प्रदक्षिणकृतो नरनाथ-
श्चण्डिकामनमदानतमौलिः ॥ २५ ॥

तत्र कृत्रिममसौ कृकवाकुं
चित्रसौष्ठवनिवासितदेवम् ।
देवि तृप्य बलिरेष तवेति
व्याजघान निजखड्गमुखेन ॥ २६ ॥

किंचिदन्तरमुदीरितनादं
लूनमस्तकमवेक्ष्य पतन्तम् ।
खड्गमुष्टिमवमुच्य शुशोच
क्लेशकृत्खलु सतामविवेकः ॥ २७ ॥

हा हतोऽस्मि सुदृशामृतमत्या
हा हतोऽस्मि विनयेन जनन्याः ।
हा गतोऽस्मि नरके चिरवासं
हा गतोऽस्मि भवबन्धमजय्यम् ॥ २८ ॥

कृत्रिमः क्व पुनरेष पतत्री
क्वासिघातपरिदेवनशब्दः ।
हन्त दुर्गतिवधूरमुना मां
छद्मना नियतमाह्वयतीव ॥ २९ ॥

भावयन्निति परिप्लुतनेत्रो
राजमन्दिरमवाप्य नरेन्द्रः ।
भोगनिःस्पृहमतिर्निजपुत्रे
निर्मुमोच पृथिवीपतिलक्ष्मीम् ॥ ३० ॥

तं तपस्यभिमुखं नरपालं
बन्धकी वचनमेतदवोचत् ।
आर्यपुत्र परिहृत्य भवन्तं
कः पुनर्मम गृहे परितोषः ॥ ३१ ॥

अद्य ते सुतवरं नवराजं
स्थापयन्नृप यशोमतिमुर्व्याम् ।
मद्गृहेऽमृतमवाश्य वनान्तं
गन्तुमर्हसि मया सह पश्चात् ॥ ३२ ॥

अन्तरङ्गमवयन्नपि तस्याः
सद्म भोक्तुमगमत्स जनन्या ।
देहिनामुपगते हि विनाशे
दुर्नयोऽपि सुनयः प्रतिभाति ॥ ३३ ॥

तावुभावपि तयोपनिबद्धै-

मोदकैर्विषमयैर्मधुदिग्धैः ।

जीवितात्ययमवापतुरार्त-

ध्यायिनौ रुचिवशाद्‌तिजग्धैः ॥ ३४ ॥

विन्ध्यनामनि गिरौ स मयूरी-

गर्भवासमगमन्नरपालः ।

पालयन्त्यपसृतं पुनरण्डं

कण्टकेन शिखिनी विनिजघ्ने ॥ ३५ ॥

लुब्धकस्तु कृपयोद्धृतमण्डं

वर्धयेति स दिदेश पुलिन्द्यै ।

वर्धितः स च तया पुनरासी-

न्नृत्यवर्तुलितरम्यकलापः ॥ ३६ ॥

चन्द्रमत्यपि मृता करहाटे

कुक्कुरः पुरवरे परिजज्ञे ।

आसदत्पुनरुपायनभूतौ

तावुभावपि यशोधरभूपः ॥ ३७ ॥

यत्र तौ सकलभूतलराज्यं

दीर्घमन्वभवतां जनहृष्टौ ।

तत्र विट्क्रिमिकुलाशनकष्टं

दुर्जयो जगति कर्मविपाकः ॥ ३८ ॥

एकदा तु स निरीक्ष्य निजस्त्रीं
 जारभोगसहितां निजहर्म्ये ।
जारचक्षुरुदितस्मृतिरुष्ट-
 श्चञ्चुवृक्णमकरोदथ केकी ॥ ३९ ॥

मस्तके विदलितोऽमृतमत्या
 सव्यथः स निपपात धरित्र्याम् ।
तं निगृह्य विचचर्व स तु श्वा
 पूर्वजन्मनि तु चन्द्रमती या ॥ ४० ॥

तं पुनः प्रियमयूरविघातं
 भूपतिस्तु नितरामसहिष्णुः ।
रात्रिजागरममारयदुच्चै-
 रक्षदेवनकृता फलकेन ॥ ४१ ॥

तौ पुनर्नरपतिर्विगतासू
 वीक्ष्य शोकमधिकं प्रतिभेजे ।
क्षुद्रतां न गणयन्ति महान्त-
 स्स्वाश्रितेषु हि कृपाबहुलत्वात् ॥ ४२ ॥

कानने पृथुनि विन्ध्यसमीपे
 हस्तिसिंहशरभादिनिवासे ।
तीक्ष्णकण्टकशिखः शललोऽभू-
 ज्जीवितात्ययगतः शितिकण्ठः ॥ ४३ ॥

सोऽपि कृष्णभुजगोऽजनि तस्मि-
　　ञ्जीवितस्य विलये मृगदंशः ।
तं कदाचिदवहत्य जघान
　　प्राच्यवैरकुपितः शल्लोऽसौ ॥ ४४ ॥

तं च कृष्णभुजगाशनतृप्तं
　　गन्तुमिच्छुमथ शल्यकमुग्रम् ।
सत्वरं तु परिवृत्य जघान
　　क्षुत्प्रवेशविकृतश्च तरक्षुः ॥ ४५ ॥

शल्यकः पुनरभूदधिशिप्रं
　　लोहिताक्ष इति मत्स्यविशेषः ।
तीव्रकृष्णभुजगश्च बभूव
　　क्रूरकर्मरसिकः शिशुमारः ॥ ४६ ॥

तं तु मीनमवहन्तुमरातिं
　　पृष्ठतोऽतिजवतः परिधावन् ।
सोऽन्तरा जलगतां नृपकुब्जीं
　　प्रत्यवाप्य बिलवासमनैषीत् ॥ ४७ ॥

ईर्ष्यया स पुनरुज्जयिनीशो
　　धीवरैर्जलबिलादवकृष्टम् ।
ग्राहवीरमथ घातयति स्म
　　च्छेदभेदपरिदाहविकल्पैः ॥ ४८ ॥

मृत्युना कवलितोऽजनि सोऽजा
    नत्पुरान्तरजनंगमवाटे ।
कर्मकोद्रवरसेन हि मत्तः
    किं किमेत्यशुचि धाम न जीवः ॥ ४९ ॥

लोहिताक्षमपि जालगृहीतं
    निन्युरन्तिकचरा नरनाथम् ।
तं विभज्य तु यशोमतिरुच्चैः
    श्राद्धकार्यमवदत्कुरुतेति ॥ ५० ॥

तस्य मांसमवखाद्य च विप्रा
    आशिषा दिवि यशोधरमूचुः ।
नन्विहास्ति शफरः क पुनर्द्यो-
    रित्यमन्यत स खण्डितमत्स्यः ॥ ५१ ॥

तं च मीनमतनुं वहति स्म
    सैव बस्तकमजा निजगर्भे ।
यस्तृतीयजननेऽजनि तीव्रो
    नीलनीरदनिभो भुजगेन्द्रः ॥ ५२ ॥

गर्भवासमपहाय स बस्त-
    स्तारयौवनसमन्वितकायः ।
अभ्यरंस्त निजयैव जनन्या
    कातरस्मरशरग्लपिताङ्गः ॥ ५३ ॥

तं तया रतिकृतं पुनरन्यो
बर्करस्त्वरितमेत्य जघान ।
तीक्ष्णशृङ्गशिखरक्षतकुक्षिः
कोपसंक्रमकषायितचक्षुः ॥ ९४ ॥

स्वान्त्यधातु रसवाहि स तस्या
गर्भधाम पुनरप्याभिशिश्ये ।
तस्य कुक्षिविवरे परिवृद्धि-
र्भारिणी चिरमभूदनजर्याः ॥ ९५ ॥

भूपतिस्तु मृगयानधिगत्य
दुर्मनाः स विपिनादपगच्छन् ।
एकवारमविचारमविध्य-
त्तामजास्त्रियमुदस्त्रमुखेन ॥ ९६ ॥

अस्त्रवेधविवरच्युतमुच्चै-
श्छागशावमवलोक्य कृपालुः ।
भूपतिः श्वपचमेवमवोच-
द्वर्धयैनामिति सोऽप्यववर्धत् ॥ ९७ ॥

अन्यदा महिषबल्युपहारं
भूपतिः प्रतिनिवेद्य भवान्याः ।
निर्जिहिंस सवयःपरिवारः
स्वेच्छया वनगतो मृगयूथम् ॥ ९८ ॥

तन्मृगव्यपरितोषविवृद्धया
चण्डिकां महिषघातमयाक्षीत् ।
माहिषं तु पिशितं द्विजतृप्त्यै
कर्मिणो रसवतीं परिणिन्युः ॥ ५९ ॥

आतपे प्रविततं तदवेक्ष्य
शोषणार्थमवदन्निति विप्राः ।
श्राद्धकर्मणि न योग्यमिदं य-
त्काककुक्कुरगृहीतमपूतम् ॥ ६० ॥

किं तु बस्तमुखचुम्बितमेत-
त्सर्वतः सपदि शुध्यति मांसम् ।
एवमेव खलु धर्मविचारे
नारदादिमुनयः प्रवदन्ति ॥ ६१ ॥

तद्वचांसि परिभाव्य स राजा
तं जनंगमगृहादजपोतम् ।
आनिनाय परिशुध्यति तस्मि-
न्सुपक्वसरसमांसमपाक्षीत् ॥ ६२ ॥

तद्यथेष्टमवखाद्य सहान्नं
ब्राह्मणा वचनमित्थमवोचन् ।
स्वर्गतस्तु सुचिरं सह मात्रा
तृप्तिमृच्छति यशोधरभूपः ॥ ६३ ॥

विप्रवाचमवधार्य स बस्त-
    श्चेतसीदमकृत स्मृतजातिः ।
सोऽहमस्मि हि यशोधरनामा
    पुत्र एष मम भूपतिरास्ते ॥ ६४ ॥

एष मे परिजनः सकलोऽपि
    सन्निवासपुरमुज्जयिनीयम् ।
रत्नमन्दिरमिदं मम देवी
    यत्र मामिह जघान विषेण ॥ ६५ ॥

सा पुनः क्व वनिता न मयासौ
    दृश्यते मनसि यत्नवतापि ।
जारमन्दिरगता रमते नु
    मृत्युवासमगमन्नु न जाने ॥ ६६ ॥

छागजन्मनि वसन्नहमद्य
    घोरदुःखमिह सोऽनुभवामि ।
एष घोषयति मां तु दिविस्थं
    ब्राह्मणैर्नरपतिः पितृभक्त्या ॥ ६७ ॥

इत्यनुस्मृतिसहस्रनिबद्धं
    दुःखमुद्वहति बर्करवर्ये ।
सापि तस्य जनिकाभिकलिङ्ग-
    मुद्बभूव विषमो हि लुलायः ॥ ६८ ॥

वाहयन्नतिभरावहपृष्ठं
तं वरिष्ठवपुषं वणिगीशः ।
उज्जयिन्युपवने निजसार्थं
वर्त्मखिन्नमथ वासयति स्म ६९ ॥

भूरिवारमवगाह्य तु शिप्रां
सैरिभः श्रमभराद्विचरन्सः ।
वारिमुक्तमवधीत्तुरगेन्द्रं
राजहंसमवनीपतिवाह्यम् ॥ ७० ॥

कोपतो नरपतिर्वणिजः स्वं
सारभूतमवलुप्य समस्तम् ।
तं लुलायमहरत्तरसा वै
चित्रकर्मविधिना विजिघांसुः ॥ ७१ ॥

कीलितेषु चरणेषु चतुर्षु
क्षारवारिपरिशोषितकुक्षिम् ।
ऊर्ध्वजानुमदहन्नृपभृत्या-
स्ते कृपाविरहिणो महिषं तम् ॥ ७२ ॥

पक्वभागमवकृत्य पुरस्ता-
द्दत्तमाशु परिखाद्य तदीयम् ।
इत्यवोचत यशोमतिमाता
नास्त्यनेन मम चेतसि तृप्तिः ॥ ७३ ॥

किं तु मे रसवतीविधृतस्य
बस्तकस्य परिखण्डितमूलम् ।
यच्छतेति मनुजाः पुनरेवं
चक्रुरेवमवदन्नपि चेत्यः ॥ ७४ ॥

पूतिगन्धि बहुभिर्व्रणरन्ध्रैः
छिन्नमङ्गमधुनामृतमत्याः ।
किंनिमित्तमथ वेयमजस्रं
मांसमत्ति नितरां तदपथ्यम् ॥ ७५ ॥

कर्म दुष्टमनया कृतमुच्चै-
स्तद्विपाकिमिदं फलमल्पम् ।
वेद्यते पुनरिहैव हि साक्षा-
त्कर्म तीव्रपरिणामनिबद्धम् ॥ ७६ ॥

अष्टभङ्गमगमन्निशि जारं
मारतुल्यमवमुच्य निजेशम् ।
मृत्युलोकमनयत्सह मात्रा
भूमिवल्लभमियं हि विषेण ॥ ७७ ॥

इत्युपात्तवचने निकटस्थे
चेटिकासदसि खण्डितबस्तः ।
इत्यमन्यत निरीक्ष्य निजस्त्रीं
क्रोधतो घुरुघुरायितघोणः ॥ ७८ ॥

तादृशं तु कुलटे वपुरेत-
त्किंनिमित्तमभवत्परिशीर्णम् ।
सत्यमेव स पतिस्तव कुष्ठी
तत्समागमकृतेयमवस्था ॥ ७९ ॥

किं विषेण मयि नोपहतेऽपि
नन्वि ते मनसि शाम्यति कोपः ।
कासरास्त्रपरिखादमतृप्ता
यन्मदूरुमपि खादसि गृद्ध्या ॥ ८० ॥

इत्यनुस्मृतिकरः स च बस्तः
सोऽपि दग्धमहिषश्च दिनेषु ।
भक्षितौ विजहतुर्नृपमात्रा
जीवितव्यमथ किं विदधाताम् ॥ ८१ ॥

तौ विमुच्य तनुमार्तमनस्कौ
कर्मणा बलवता ह्युपनीतौ ।
तत्पुरे श्वपचवेश्मनि कृच्छ्रे
कुक्कुटौ सममुपाजनिषाताम् ॥ ८२ ॥

अथ तौ प्रसङ्गपरिलोकितावुभा-
वुपनीय दर्शयति चण्डकर्मणि ।
तनयाविव त्वमभिवर्धयादरा-
दिति तं जगाद नृपतिर्यशोमतिः ॥ ८३ ॥

तरलनयनौ तारश्यामैः पतत्रपरिच्छदै-
र्वयसि दधतौ चूडारत्नं जपाकुसुमच्छवि ।
कनकनिकषच्छायाचौर्योल्लसच्चरणाङ्कुरौ
सुखमवृधतां तौ तद्वासे सुपञ्जरवासितौ ॥ ८४ ॥

राजा सोऽपि यशोमतिः प्रविलसत्साम्राज्यलक्ष्मीपतिः
कुर्वन्काव्यबृहस्पतिप्रभृतिभिः संदर्शितं मन्त्रिभिः ।
संतृप्यन्नमृतेन क्लृप्तविधिना श्रीवैद्यविद्यार्णवै-
र्व्यानन्वञ्जयसिंहतां रणमुखे दीर्घं दधौ धारिणीम् ॥८५॥

इति श्रीवादिराजसूरिविरचिते यशोधरचरिते महाकाव्ये

तृतीयः सर्गः ।

## ॥ चतुर्थः सर्गः ॥

अथैकदासौ नृपतिर्मधूत्सवे
वने प्रवृत्ते कुसुमावलीसखे ।
मुदा तदात्मानमिवावलोकितुं
जगाम विस्तारितहृद्यसौरभम् ॥ १ ॥

उपेयुषस्तस्य वनं मधुश्रिया
कलक्वणत्कोकिलकण्ठनादया ।
अकथ्यत स्वागतमुर्वरापते-
र्ध्रुवं नवीनोद्गमशुभ्रहासया ॥ २ ॥

निकामतन्व्यः प्रसवैः सुगन्धयं-
स्तदा दधानास्तरवः प्रवालताम् ।
इतस्ततो जग्मुरिलापतेः स्त्रियो
लतास्तु न स्थावरतां विनत्यजुः ॥ ३ ॥

उपस्थिते पुष्पसमृद्धिविप्लवे
भयादिवाकम्पि मरुद्भरैर्द्रुमैः ।
अनल्पसंवासकृतः कृतस्वनाः
प्रपद्यतातन्वरुदन्निवल्लयः ॥ ४ ॥

दुराक्रमांस्तुङ्गतया तु मानवैः
सुदूरमध्यारुरुहुर्लतास्तरून् ।
तदग्रभागे कुसुमश्रियः स्वयं
निवासरक्षामिव कर्तुमिच्छवः ॥ ५ ॥

निगृह्य शाखासु नितम्बिनीजने
प्रसूनगुच्छानवलूय चिन्वति ।
मधुव्रतानां ध्वनिरुद्गतोऽभव-
त्प्रवेदनाध्वान इव द्रुमैः कृतः ॥ ६ ॥

नतभ्रुवां केचिदनोकहा वने
प्रसूनशाखास्ववलम्बतां गताः ।
ततः प्रभृत्युद्भविनो विरेजिरे
वराङ्गनाङ्गा इव कल्पपादपाः ॥ ७ ॥

प्रवालशय्यामधिशिश्यिरे मुदा
  लतागृहे काश्चन वारयोषितः ।
मधूत्सवासादितरागसंपदा
  समन्ततः पल्लविता इव क्षणे ॥ ८ ॥

पुरो दधानः कुसुमावलीं प्रियां,
  प्रसूनतल्पे तरुमूलकल्पिते ।
नृपः स रेमे परितोऽवधारय-
  न्वसन्तगीतं वनितामुखोद्गतम् ॥ ९ ॥

विशोधयन्व्यालमृगान्सतस्करा-
  न्स चण्डकर्मा परितो वनं तदा ।
अकम्पनं नाम महामुनीश्वरं
  ददर्श रम्यं तरुमूलमाश्रितम् ॥ १० ॥

उपस्थितं साधु समाधिचेतसा
  मुनिं विनीतः स विनम्य पादयोः ।
अपृच्छदेवं प्रतिपत्तुमिच्छया
  करोति हि श्रेयसि भव्यतागुणः ॥ ११ ॥

निमील्य नेत्रे स्थिरमासनं त्वया
  निबध्नता किं भगवन्विचिन्तितम् ।
फलं च तच्चिन्तनया किमुच्यतां
  न निष्फलं यच्चरितं भवादृशाम् ॥ १२ ॥

अवोचदेवं मुनिरप्युदारधी-
रवेत्य भव्यं हृदि चण्डपाशिकम् ।
अयं मयात्मा सुविविच्य भावितो
भवप्रबन्धार्णवमुत्तितीर्षुणा ॥ १३ ॥

निशम्य चैतद्वचनं महामुने:
स चण्डकर्मा पुनरित्यवोचत ।
तयोर्न भेद: खलु देहदेहिनो-
र्मयोह्यते विस्तरतोऽद्य तद्यथा ॥ १४ ॥

निगृह्य चोरं तु निकृत्य चोच्चकै:
कदाचिदेकं परमाणुमात्रकम् ।
मया हि जीव: खलु नोपलक्षित:
पृथग्भवेच्चेति ममोपलक्ष्यते ॥ १५ ॥

तथान्यथा तस्कर एव केवलं
प्रमाय पूर्वं तुलयाथ मारित: ।
तया पुन: संमित एव तत्प्रम:
पृथक्स चेदल्पतयावतिष्ठते ॥ १६ ॥

प्रवेश्य चोरं हि महत्कुसूलकं
विलिप्य लाक्षां बहिरप्यरन्ध्रकम् ।
गते हि काले ददृशे शरीरकं
न जीवमार्गस्तदलोकमुच्यते ॥ १७ ॥

मुनिर्बभाषे शृणु चोत्तरत्रयं
तरौ कृशानुर्दलितेऽपि खण्डशः ।
न दृश्यते सोऽरणिमन्थनादृते
तथा शरीरे समुपेहि निश्चयम् ॥ १८ ॥

प्रमाय भस्त्रां तुलया पुनश्च तां
प्रपूर्णवायुप्रमितां विलोकयन् ।
प्रमाणभेदोऽत्र न दृश्यते यथा
तयोः पृथक्त्वेऽपि तथैव निश्चितम् ॥ १९ ॥

प्रविश्य रोहं पुरुषेऽप्यरन्ध्रकं
धमत्यलं शङ्खमुदात्तनादकम् ।
ध्वनिर्बहिर्गच्छति नास्ति तत्पथ-
स्तथात्र मन्यस्व विचारपूर्वकम् ॥ २० ॥

स कीदृशश्चेदयमुच्यते महा-
ननाद्यनन्तः स्वपरावभासकः ।
स्वतोऽन्यतश्चैष पुनः प्रतिक्षणं
विवर्तते हेतुफलात्मना क्रमात् ॥ २१ ॥

स एव कर्ता खलु पुण्यपापयोः
स एव भोक्ता सुखदुःखयोस्तथा ।
उपायसिद्धया परिभावितः पुनः
स एव तत्कर्ममलैर्विमुच्यते ॥ २२ ॥

प्रयोजनं तत्परिभावनाविधे-
हिंतावबोधादहितस्य वर्जनम् ।
हितं तु सम्यक्त्वमिदं तनूभृतां
प्रतीहि तेषामहितं विपर्ययम् ॥ २३ ॥

सरागसम्यक्त्वगुणैर्व्रतैरयं
सदैव बध्नाति हि पुण्यमात्मनि ।
वदन्ति सम्यक्त्वममन्दमेधसो
रुचिं तु जीवादिपदार्थगोचराम् ॥ २४ ॥

अहिंसनं सत्यमचौर्यमुच्चकै-
रकामसेवा विषयेष्वमूर्च्छनम् ।
व्रतानि पञ्चेति फलं त्वनुक्रमा-
द्विभज्य तेषामिति वर्ण्यते बुधैः ॥ २५ ॥

अहिंसनं वैरहरं परं भवे-
त्तनोति सत्यं तदमोघवाक्यताम् ।
अचौर्यमाकर्षति रत्नसंचयं
बलावहं ब्रह्मचारित्रमूर्जितम् ॥ २६ ॥

भवस्य पूर्वापरकोटिभाविनो
भवत्यमूर्च्छा व्रतिनः प्रवेदनम् ।
त्यजन्ति सन्तो मधुमद्यमांसकं
व्रतेषु पुष्टिं विधिवद्विधित्सवः ॥ २७ ॥

विविच्य सम्यक्त्वमुदीरितं मया
न तत्परं किंचिदिहात्मने हितम् ।
व्रतैर्विहीनोऽपि तदुद्वहञ्जनो
न जातु दुःखादिनिवासमृच्छति ॥ २८ ॥

इह व्रतानां तु विपर्ययैर्जनः
प्रविश्य कष्टं भवनाट्यमण्डपम् ।
विभृत्य नानाविधयोनिभूमिकां
परिभ्रमन्क्लेशमुपैति केवलम् ॥ २९ ॥

यशोधरस्तज्जननी च यावुभौ
निहत्य तौ कृत्रिमताम्रचूडकम् ।
भवेषु विभ्रम्य नितान्तदुःखिता-
विमौ तवान्ते वसतोऽद्य कुक्कुटौ ॥ ३० ॥

करोति दुःखं यदि दूरदुःसहं
वधस्तु संकल्पनया विचेष्टितः ।
किमङ्ग साक्षात्किमुतानृतादिभिः
समन्वितोऽसौ यदि सामवायिकैः ॥ ३१ ॥

विमुञ्च तद्वत्स विहिंसनादिकं
ममेदमाजीवनमित्यलं धिया ।
वदन्ति सन्तो हि यदात्मसंविदो
हिताहितादानविवर्जनं फलम् ॥ ३२ ॥

इदं वचस्तस्य निशम्य सन्मुनेः
स चाददे दृष्टिमणुव्रतोत्तराम् ।
अनुस्मृतातीतभवौ च कुक्कुटौ
ततो मुदा चुक्रुशतुश्च तावुभौ ॥ ३३ ॥

नृपस्तदानीं धनुषि स्वकौशलं
मृगीदृशे दर्शयितुं कृतोद्यमः ।
विविच्य विव्याध निनादवेदिना
शरेण तौ पञ्जरवासिनौ खगौ ॥ ३४ ॥

विमुक्तवन्तौ व्रतरत्नबन्धुरं
मनः समाधाय तनुं पतत्रिणौ ।
अधत्त गर्भं कुसुमावली तदा
मणी व गूढद्युतिबन्धनौ खनिः ॥ ३५ ॥

असूत सा तौ तनयौ तयोः पुमा-
न्यशोधरश्चन्द्रमती तु कन्यका ।
अवर्धिषातां विधुतत्प्रभानिभौ
जनस्य नित्यं नयनामृतायितौ ॥ ३६ ॥

विमुक्तबाल्ये वयसि प्रकुर्वतो-
रुदात्तविद्यासु परिश्रमं तयोः ।
नृपो वनान्ते नियमस्थितं मुनिं
निरूपयन्नेव ययौ मृगाटवीम् ॥ ३७ ॥

ततो मृगाणामनवाप्य हिंसनं
निवर्तमानो वदनेन शुष्यता ।
मृगव्यविघ्नोऽयमिति क्रुधा मुना-
वधोद्यतत्पञ्चशतीं स शौवनीम् ॥ ३८ ॥

तपःप्रभावात्तमनिघ्नतीं पुन-
र्विलोक्य तां तत्र विवृद्धमत्सरम् ।
स्वहस्तहिंसां कलयन्तमागतो
वणिक्‌कु कल्याणसुहृत्प्रसङ्गतः ॥ ३९ ॥

उपद्रवं तस्य मुनेर्विलोकय-
न्नवोचदेवं स तदा यशोमतिम् ।
महामुनौ देव नमस्क्रियोचिते
किमीदृशं कर्तुमिह त्वमर्हसि ॥ ४० ॥

दुरीहितं किं च यदत्र तत्परं
तदेव मुष्णाति भवे भवे शिवम् ।
मनस्तु नित्यं तदपि स्थिरं वह-
न्नजय्यशक्तिः शतयज्वनोऽप्ययम् ॥ ४१ ॥

अमर्षणोऽप्येष करोत्यनुग्रहं
विनिग्रहायैष भवत्यकोपनः ।
अनारतं ज्ञानसमाहितात्मना-
मलोकसामान्यमिदं विचेष्टितम् ॥ ४२ ॥

ततोऽस्य भक्त्या प्रणिपत्य पादयो-
गृहाण वाचं कृतदोषशोधनीम् ।
प्ररोचते तुभ्यमिदं हि मद्वचो
न चेदधस्तादवपातुमिच्छसि ॥ ४३ ॥

नृपस्तु तं प्रत्यवदत्कथं त्विमं
नमेयमस्नानतनुं मलीमसम् ।
कुलेन कोऽसाविति निर्णयादृते
वने मृगव्यस्य विनिघ्नकारिणम् ॥ ४४ ॥

वणिक्त्ववादीदयमेव सर्वदा
शुचिः सदाचारनिरुद्धकिल्बिषः ।
जलेन शुद्धिस्त्वपवित्रचेतसां
पुरीषमुष्टेर्बहिरम्बुमार्जनम् ॥ ४५ ॥

कुलेन गङ्गोऽयमनङ्गनिर्जयी
चिरं कलिङ्गेष्वधिरूढविक्रमः ।
सुदत्तनामा पुनरद्य तप्यते
तपः कुतोऽप्युद्धृतभोगलालसः ॥ ४६ ॥

मृगव्यलीलाविनिघातकारणं
यदात्थ देव त्वममुं तथैव तत् ।
अमुष्य धर्मप्रकृतेः प्रभावतो
वने न पापर्धिरिह प्रवर्तते ॥ ४७ ॥

सुहृद्वचस्तत्परिभाव्य भूपति-
स्तमादरेण प्रणनाम पादयोः ।
अमन्यतैवं शिरसैनमर्चय-
न्करोमि सद्यः परिशुद्धिमागसः ॥ ४८ ॥

मुनिश्च राज्ञः स्वशिरश्चिकीर्षतो-
र्निवार्य हस्तेन हृदिस्थमब्रवीत् ।
सविस्मयस्तं समपृच्छदादरा-
त्पितामहादेर्गतिमुर्वरापतिः ॥ ४९ ॥

ततोऽवधिज्ञाननिरूपितं मुनि-
र्यथावदाख्यन्नृपतेर्मनीषितम् ।
पितामहस्ते तपसा स पञ्चमा-
त्परं नृपः स्वर्गमगच्छदूर्जितम् ॥ ५० ॥

स तत्र दिव्याभरणैर्विभूषितो
नवोदितादित्यनिभश्च तेजसा ।
सुखानि देवीनिवहेन निर्विश-
न्ननूनकामो रमते दिवानिशम् ॥ ५१ ॥

विषेण हत्वा निजमेव वल्लभं
तवापि माता व्यजनिष्ट कुष्ठिनी ।
मृतापि सा दुर्गतिमभ्युपेयुषी
सुदुःखिता सीदति वत्स पञ्चमीम् ॥ ५२ ॥

यशोधरस्ते जनकः पतत्रिणं
निहत्य तद्दोषवशेन कृत्रिमम् ।
बभूव केकी शललोऽथ मीनक-
श्छागो द्विवारं क्रमतश्च कुक्कुटः ॥ ९३ ॥

यशोधसूनोर्जननी क्रमादभू-
दनल्पदुःखा तत एव दोषतः ।
स सारमेयो भुजगश्च नक्रक-
श्छागाङ्गना सा महिषोऽथ कुक्कुटः ॥ ९४ ॥

ततो वनान्ते भवता निपातितौ
धनुर्भृता भूमिप शब्दवेधिना ।
विमृश्य शुद्धया कृकवाकुनन्दना-
विमावभूतां कुसुमावलीसुतौ ॥ ९५ ॥

इति स्वसंकल्पनयापि हिंसया
निशाम्य घोरं भवविभ्रमं पितुः ।
नृपः स भीतो बहुजीवघाततो
व्यधत्त वैराग्यरसाधिकं मनः ॥ ९६ ॥

तदीयपुत्रावपि तत्क्षणे गतौ
मुनीश्वरे वक्तरि तद्भवक्रमम् ।
विभक्तमन्वस्मरतामपि स्वयं
प्रबोधकप्रायभवा खलु स्मृतिः ॥ ९७ ॥

ततश्च निर्वेगपरो नराधिपो
    नराधिनाथैर्बहुभिः समन्वितः ।
विमुच्य राज्यं तनये तपोऽग्रही-
    द्वणिक्च कल्याणसुहृन्महामतिः ॥ ५८ ॥

पितुस्तपोविघ्नभयात्तदात्मज-
    स्तदाग्रहीत्तन्नरनाथवैभवम् ।
विरक्तचेता विषयेषु दत्तवा-
    न्यशोधराख्याय निजानुजन्मने ॥ ५९ ॥

ततो भगिन्या सह मुक्तमोहया
    सुदत्तमासाद्य महामुनीश्वरम् ।
त्यजन्परिस्पन्दमनिन्दया धिया
    विमोक्षविद्यासु गुणैरशिक्ष्यत ॥ ६० ॥

इत्थं यौ नृपतनयौ यशोमतीयौ
    कान्तारे गुरुचरणावुपासिषाताम् ।
आवां तावभयरुचिं तयोस्तु नाम्ना
    मामुच्चैरभयमतीमिमां वदन्ति ॥ ६१ ॥

अद्य ते नगरतो बहिर्वने
    मारिदत्त वसतो महामुनेः ।
वीक्षणाय नियमादिहागता-
    वग्रहीष्वहि तु चण्डकर्मणा ॥ ६२ ॥

संकल्पहिंसाजनितं तु घोरं
भवेषु दुःखं तदिदं स्मरन्तौ ।
विमुच्य बाल्येऽपि विभूतिमिद्धा-
मास्तां हि शिष्यौ मुनिपुंगवस्य ॥ ६३ ॥

क्व कृत्रिमपतत्त्रिणो वधविधिः क्व तद्दुःसहं
भवभ्रमणमावयोरिति मनःपरीतापिनौ ।
जिघांसुमिह जीवराशिमधुना भवन्तं पुन-
र्विलोक्य कृतविस्मयौ कृतकृपौ च वर्तावहे ॥

विरक्तिमासाद्य तु चण्डमारी
विलोक्यमाना वपुषा जनौघैः ।
ननाम युग्मं वधदुःखभीरु-
स्तदाज्ञयासादितशुद्धदृष्टिः ॥ ६५ ॥

पूजयन्तु शुचिभिः कुसुमाद्यै-
र्मामितः प्रभृति मत्पदभक्ताः ।
कुर्वतस्तु वधमत्र कुटुम्बं
नश्यतीत्यभिनिवेद्य तिरोऽभूत् ॥ ६६ ॥

देव्या तयोरर्चनया तयैव
चित्रीयमाणः सह पौरवर्गैः ।
अवेत्य तौ स्वस्य च भागिनेयौ
स मारिदत्तो नृपतिर्जहर्ष ॥ ६७ ॥

अपि च कुसुमदत्ते पुत्रवर्ये स्वराज्यं
विषयसुखविरक्तो मारिदत्तो विधाय ।
वनगतमथ ताभ्यां श्रीसुदत्तं प्रपन्नो
निरुपमविनयश्रीः संयमित्वं प्रपेदे ॥ ६८ ॥

विद्यामधीत्य सुचिरं गुरुसंनिधाने
तप्त्वा तपश्च बहिरन्तरिति द्विभेदम् ।
त्यक्त्वा समाधिविधिना तनुमायुरन्ते
देवोऽभवत्स नृपतिस्त्रिदिवे तृतीये ॥ ६९ ॥

अल्पं निजायुष्यमवेत्य तौ च
तपश्चरित्वा यमलौ यथोक्तम् ।
योगेन निर्मुच्य शरीरबन्ध-
मीशानकल्पेऽनिमिषावभूताम् ॥ ७० ॥

अमरवनितामारस्मेरावलोकनगोचरं
तरुणतरणिच्छायाचोरं तदा दधतौ वपुः ।
विषमभवनिःसारीकर्तुर्मुनेः स्मरणावहौ
परमसुखिनौ रेमाते तौ सुरावसथस्थितौ ॥ ७१ ॥

स्वर्गाधिरोहमवधार्य तयोः सुदत्ता-
यौधेयभूतलपतेश्च तपोबलेन ।
तद्विप्रयोगजनितं प्रविमुच्य शोकं
प्रीतिं यशोधरनृपः परमां जगाम ॥ ७२ ॥

गुरुषु विनयवृत्तिं बन्धुषु प्रेमबन्धं
रिपुषु करकृपाणं दर्शयन्नाहवेषु ।
अधिगतनयसिन्धुः सत्यसंधः स राजा
रणमुखजयसिंहो राज्यलक्ष्मीं बभार ॥ ७३ ॥

धर्म्ये वर्त्मनि तेजसा नियमयन्वर्णांस्तथैवाश्रमा-
न्वृद्धाराधनया हृषीकविजयादुत्तीर्णविद्यार्णवः ।
पारावारपरम्परीणपरमख्यातिर्नयोत्कृष्टधी-
रासेविष्ट यशोधरो नरपतिर्दीर्घं त्रिवर्गश्रियम् ॥७४।

इति श्रीमद्वादिराजसूरिविरचिते यशोधरचरिते महाकाव्ये
चतुर्थः सर्गः ।

---

समाप्तोऽयं ग्रन्थः ।